अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

२६ वर्षे प्रथमोऽङ्कः, (जनवरी-जूनमासाङ्कः) २००१ ई.

प्रधानसम्पादकः
**प्रो० वाचस्पति उपाध्यायः**
कुलपतिः

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**



प्रकाशन-स्थलम्
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
**(मानितविश्वविद्यालयः)**
**नवदिल्ली-११००१६**

प्रकाशकः

**कुलपतिः,**

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानित-विश्वविद्यालयः)

कटवारियासरायः, नवदिल्ली-११००१६

ISBN : 81-87987-13-6

२६ वर्षे प्रथमोऽङ्कः, जनवरीमासतो जून, २००१ ई० पर्यन्तम्

वार्षिकं मूल्यम् — १००.०० (शतं रूप्यकाणि)

अस्याङ्कस्य मूल्यम्— ३०.०० (त्रिंशत् रूप्यकाणि)



मुद्रकः

**अमरप्रिंटिंगप्रैसः**

८/२५, विजयनगरम्, दिल्ली-११०००९

दूरभाषः : ७२५२३६२

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्ष जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते ।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते ।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते ।

६. प्रकाशित-निबन्धस्य प्रतिमुद्रणानि पत्रिकायाश्च सोऽङ्को (एका प्रतिः) लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते । तदर्थं द्वे प्रतिकृती प्रेषयितव्ये । आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते ।

८. अस्याः वार्षिकं मूल्यमस्ति १००-०० रु० (शतं रूप्यकाणि) एकाङ्कस्य च ३०-०० रु० (त्रिंशत् रूप्यकाणि)। विशेषाङ्कस्य मूल्यं स्वतन्त्रतया निर्धारितं भवति। इदं शुल्कं **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६,** इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयम् ।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः ।

**सम्पादकः**

# नैवेद्यम्

भारतीयसंस्कृतिः स्वकीयवैशिष्ट्यमाहात्म्यादद्यापि विद्योतते सुतराम्। तेषु वैशिष्ट्येष्वध्यात्मचिन्तनं सर्वाधिकं महत्त्वपूर्णं विद्यते। भौतिकप्रगतेः न कदापि भारतीयैरुपेक्षा कृता। प्रत्युत, न केवलं प्राचीने काले किञ्चाद्यापि, न केवलं विद्वांसः किञ्चाशिक्षिताः ग्रामीणा अपि भौतिकविकासप्रक्रियाभिः परिचिता एव सन्ति। भौतिकसामग्रीणामुपरि अस्माकं ममता न कदापि समाप्तिमेति। यतोहि- वासनानां सन्तुष्टिः सदैवासम्भवा। अत एव भारतीयैराध्यात्मिकता समाश्रिता। आध्यात्मिकता नाम नैव शून्यं काल्पनिकं किञ्चित् वस्तु किञ्च भौतिकविकासस्याश्रयस्थानं चरमबिन्दुश्च भवति। भौतिकतायाः लक्ष्यमेव आध्यात्मिकोन्नतिर्भवति। भौतिविकासः साधनमेव न साध्यः। न किमप्यङ्गमस्ति भारते यदस्ति आध्यात्मिकतया अस्पृष्टम्। कलासाहित्यसङ्गीतदर्शनधर्मविज्ञानकामादिसर्वाण्यपि क्षेत्राणि अनया प्रभावितानि। पुनर्जन्म-कर्मफलसिद्धान्तैः जीवनस्य नैरन्तर्ये भारतीयानां विश्वासः दृढीभूतः तथा च आध्यात्मिकविकासवादस्य प्रतिपादनमपि विहितम्। जीवनस्य चत्वारः पुरुषार्थाः भारतीयैरङ्गीकृताः, तत्र मोक्षस्य चरमपुरुषार्थस्य सर्वोत्कृष्टस्थानमपि प्रकल्पितम्। मोक्षस्यैव साधकाः अन्ये सर्वेऽपि पुरुषार्थाः।

उदारता संकीर्णताराहित्यञ्च भारतीयसंस्कृतेः द्वे वैशिष्ट्ये। एक एव धर्मग्रन्थः महत्त्वपूर्ण इति विचारः भारतीयानां स्वीकार्यो नास्ति। एकस्यैव देवस्याथवा देवदूतस्योपरि भक्तिभावः भारतीयेषु कदापि न दृश्यते। एकेनैव प्रकारेण वस्त्रधारणं वा भोजनपद्धतिर्वा भारते कदापि नासीत्, नाद्याप्यास्ति। विभिन्नेष्वेतेषु भारतीयानां परस्परं तिरस्कारभावनापि नास्ति। अपितु सर्वेषां समादरः, सर्वत्र च समरसतायाः भावना भारतीयसंस्कृतेः प्रमुखं वैशिष्ट्यं वर्तते।

भारतीयसंस्कृतौ धर्मस्य प्रमुखं स्थानमासीत्। आस्तिकतैव सर्वत्र वितता आसीत्। चार्वाकानां स्वमतप्रचारे काप्यसुविधा न दरीदृश्यते स्म। धर्मसुधारकानामुपरि दुर्व्यवहारः भारते न कदापि संलक्षितः।

भारतीयसंस्कृतौ शिक्षा पवित्रतमप्रक्रिया मन्यते। ग्रन्थेषु ज्ञानस्य महिमा सर्वत्र वर्णितो दृश्यते। "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति वदन् भगवान् श्रीकृष्णः ज्ञानं पवित्रतममिति समुदघोषयत्। महाभारतेऽप्युक्तं "नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः" इति। भारतीयसंस्कृत्यनुसारं शिक्षा व्यक्तेः समाजस्य चोन्नत्यर्थं सबलं माध्यममस्ति। तच्च ज्ञानं प्रारम्भादेव प्रवचनेन निबन्धप्रकाशनेन प्रसारयितुं प्रवृत्तं विद्यापीठमिदं वर्तते। अस्यामेव दिशि विद्यापीठीया शोधपत्रिका शोधप्रभा स्फुटमेव प्रकाशते। अत्र प्रकाशिताः शोधगर्भाः निबन्धा अवश्यमेव विदुषामुपकाराय भविष्यन्तीति मे प्रत्ययः शोधप्रकाशनक्रियाकलापे व्यापृतात्मन आचार्यरमेशकुमारपाण्डेयाय धन्यवादं वितन्वन् सर्वेषां पाठकानां शं परमेश्वरं प्रार्थये।

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

# सम्पादकीयम्

श्रीस्थलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रकाशनविभागेन त्रैमासिकरूपेण प्रकाश्यमानेयं 'शोधप्रभाख्या शोधपत्रिका संस्कृतभाषान्तर्गतविभिन्नशास्त्राण्यधिकृत्य विलिखितानां गवेषणपूर्णानां नैकेषां निबन्धानां समाहर्त्री सती विलसति। सुरभारतीवाङ्मये निहितानां निगूढतत्त्वानामनवरताविष्कारेण प्रथितयशस्केयं शोधपत्रिका अखिलभारतस्तरे समस्तैरपि विद्वद्भिः सुतरामनुमोदिता विद्योतते।

असंख्यवर्षेभ्यः सकलभारतीयमानवमनोनिर्गलितनवचिन्तनानामाविष्करणे, सुनिश्चितार्थपदावलीपरिलसिता सुनिबद्धपदवाक्यप्रमाणपरिपूर्णा प्राचीनजनसमुदायभाषितभाषा सुरवाणी एकैव क्षमाऽऽसीदिति ऐतिहासिकं तथ्यम्। वैदिशिकाक्रमणेन 'ग्रीक्' 'रोमा' प्रभृतिसंस्कृतिषु कालकवलितासु सतीषु, कालान्तरेण तदीयासु भाषास्वपि लुप्तप्रायासु, सहस्राधिकसंवत्सराणि वैदिशिकानामधीने प्रणष्टसमस्तभौतिकसम्पदा सर्वथा परतन्त्रा सती भारतीया धरेयमधुनाप्यतुल्यसंस्कृतिपरिशोभिता विराजत इति किमन्यत् कारणं भवितुमर्हति संस्कृतभाषायाः तत्परिरक्षणसामर्थ्यमतिरिच्य। एकतः पार्श्वे आङ्गलशासकैः सुरवाण्याः तदन्तर्गतसंस्कृतेश्च सर्वनाशाय विविधरूपेण प्रयासेषु विहितेषु, अपरतः तदीया एव जनाः संस्कृतस्य संस्कृतेश्च अध्ययनगवेषणादिकं निरन्तरं विधाय तन्महत्त्वमुच्चैस्तरं समुदघोषयन् येन संस्कृतारयः लज्जया नम्रशिरस्काः समभवन्। अधुनापि भारते विदेशेषु च संस्कृतमाधारीकृत्य बहुविधानुसन्धानकार्याणि प्रचलन्त्येव। भाषायामस्यामनायासेन संभाषणं कृत्वा आधुनिककालेऽपि अस्याः प्रासङ्गिकत्वं निरूपितं विद्वद्भिराधुनिकैः। अतः एतादृशेऽस्मिन् सन्दर्भे शोधप्रभासदृशानां पत्रिकानां प्राधान्यं वर्धत एव। आत्मन्यधिष्ठितकर्तव्यपरिपालनेन निरन्तरं सञ्चरन्ती विद्यते महत्त्वपूर्णेयं पत्रिका।

अस्मिन्नङ्के विविधविषयविश्लेषपराः द्वाविंशतिः लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

प्रो० रमेशकुमारपाण्डेयः

संपादकः

# विषयानुक्रमणिका

निखिलनिगमागमवाङ्माधुरीमकरन्दरसावेशितचेतसां, विदग्धमण्डलमण्डनानां, सकलभूमण्डलविश्रुतकीर्तिभाजां, शासनप्रशासनपटुकरणानामशेषशेमुषीजुषामनन्तश्रीविभूषितानां, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिपद—समलङ्कुर्वतामुपाध्यायकुलमणीनां, पण्डितवर्य्याणां, साक्षाद्वाचस्पतीनामिव वाचस्पतिमहाभागानां करकमलकुड्मलयोः राष्ट्रपतिसम्मानसमुद्घोषणावसरे समर्पितम्

# अभिनन्दनपत्रम्

यज्ज्ञानं चरितायतेऽनुदिवसं यत्कर्म पुण्यायते,
यत्पुण्यं विपुलायते स्वयमहो कीर्तिर्दिगन्तायते ।
पुण्या वंशपरम्परा प्रतिकलं हर्षायते लीलया,
सोऽयं वर्षशतं भुनक्तु वसुधां मोदेन वाचस्पतिः ॥

शास्त्राम्भोधितलावगाहनपटुः, शास्त्रप्रियः सन्ततं,
विद्वन्मानविवर्द्धकोऽस्त्यनुदिनं योऽयं सतामग्रणीः ।
छाया यस्य सुखावहा कुलपतेर्विद्याधराणां कृते,
धन्यो राष्ट्रपतेः पुरस्कृतियुतो जीवेत्स वाचस्पतिः ॥

यस्यास्ये मधुरस्मितं प्रियकरं बुद्धौ च विद्याप्रभा,
शुद्धे चेतसि राष्ट्रभक्तिरतुला सच्छेमुषी चिन्तने ।
माधुर्यं शुचि वाचि तृप्तिमहितं धर्मश्च गेहाश्रमे,
मीमांसामृतधारको विजयते लोकेषु वाचस्पतिः ॥

नित्यं चापि सरस्वती प्रमुदिता यत्कर्मणा भूतले,
हर्षक्लिन्नतनुश्च सा सुरगवी यत्सेवया नृत्यति ।
लोकोद्बोधनपाटवेन सुतरां मुग्धास्ति विद्वत्सभा,
सोऽयं सर्वसुखप्रदो विजयतां राष्ट्रेषु वाचस्पतिः ॥

योऽयं संस्कृतवर्द्धनाय कृतवान् यद्विश्वसम्मेलनं,
तस्मिन्नत्र समागताः सुमतयो विद्वद्धुरीणाः समे ।
सर्वैरस्य प्रशंसितोऽस्ति महिमा पूर्णे धरित्रीतले,
सोऽस्माकं कुलभूषणः कुलपतिः जीवेन्नु वाचस्पतिः ॥



गुरवे वाचस्पतये, प्रणमति तं राष्ट्रपतिपुरस्कारे ।
प्रणवोऽसौ कविकर्मा कृत्वेदं संस्तवं नव्यम् ॥

वयं स्मः विद्यापीठस्थाः सर्वे आचार्याः, अधिकारिणः, अन्तेवासिनः, कर्मचारिणश्च

दिनांकः २२ अगस्त, २००१ श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-११००१६

# वेदार्थे व्याकरणाङ्गोपकारिता

■ डॉ० देवेन्द्रनाथत्रिपाठी

वेदानां स्वरूपस्यार्थस्य च संरक्षणार्थं वेदाङ्गानां समुदयो जातः। 'अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गानी-त्यनया व्युत्पत्या अङ्गशब्दस्योपकारकः इत्यर्थः। वेदाङ्गं विना वेदस्य सम्यक् ज्ञानं भवितुं न शक्नोति। यथोक्तं सायणाचार्येण—

"अतिगम्भीरस्य वेदस्यार्थानवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि"[१] इति।

एतेषां वेदाङ्गानां समुदयोऽपराविद्यारूपेणोपनिषत्काल एव जातः। यथोक्तं मुण्डकोपनिषदि—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते"[२] इति।

एतेषां वेदाङ्गानां मध्ये व्याकरणस्यातीवमहत्त्वपूर्णं स्थानमस्ति। व्याक्रियन्ते शब्दा अनेनेति व्याकरण-मित्यनया व्युत्पत्या व्याकरणं पदमीमांसाशास्त्रमस्ति। व्याकरणं प्रकृतिप्रत्यययोर्निर्धारणेन पदस्वरूपस्य तदर्थस्य च विनिश्चयीकरणं करोति। इदमेव व्याकरणशास्त्रस्य महत्त्वपूर्णं स्थानं दृष्ट्वा महर्षिणा पाणिनिना स्वशिक्षाया-मुक्तं यत्-"मुखं व्याकरणं स्मृतम्"[३] इति। अस्य कथनस्यायं भावो यत्, यथा मुखं विनाऽशनाद्यभावेन शरीरपुष्टिरसम्भवा, तथैव व्याकरणं विना साक्षात्परमेश्वरस्य निःश्वासभूतस्य[४] वेदस्यापि शरीररक्षा स्थितिश्चा-सम्भवैव। इदमेवानुमोदयन् महाभाष्यकारेण महर्षिणा पतञ्जलिना पडङ्गेषु व्याकरणस्यैव प्राधान्यमुद्घोषितम्—

"प्रधानं च षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति"[५] इति।

अस्य व्याकरणस्य वेदाङ्गत्वं वैदिकशब्दार्थबोधकत्वञ्चोभयविधमभिप्सितार्थं समर्थयन् महाभाष्यकारेण 'शब्दानुशासनस्य प्रयोजनानि'[६] इति निगदितानि, न तु व्याकरणस्येति। यतो हि व्याकरणशास्त्रस्य शब्दार्थबोध-कत्वं शब्दानुशासनशब्देनैव बुध्यते, न तु व्याकरणमात्रेण यथोक्तं सर्वदर्शनसंग्रहकारेण—

---

१. ऋ० भा० भू०, पृ०-११६

२. मु० उ०, १/१/४-५

३. पा० शि०, ४२

४. यस्य निःश्वसितं वेदाः, सायणाचार्यः ऋ. भा. मू.-२

५. महाभाष्यम्, प्र० आ० पृ० ११

६. महाभाष्यम्, प्र० आ० पृ० - १०

"तस्यार्थस्य प्रतिपत्तये अथ व्याकरणमेवाभिधीयताम् । अथ शब्दानुशासनमित्यधिकाक्षरं मुधाभिधीयत इति । मैवम् । शब्दानुशासनमित्यन्वर्थ समाख्योपादाने तदीयवेदाङ्गत्वप्रतिपादकप्रयोजनान्वाख्यानसिद्धेः अन्यथा प्रयोजनानभिधाने व्याकरणाध्ययनाध्येतॄणां प्रवृत्तिरेव न प्रसजेत्"[१] इति ।

व्याकरणं विना वेदरक्षा न भवितुमर्हति । अतो व्याकरणाध्ययनं नित्यं वेदाध्ययनवत्, न तु काम्यम् । वेदाध्ययनात् पूर्वमेव व्याकरणाध्ययनमावश्यकम् । यथोक्तं महावैयाकरणेन भर्तृहरिणा—

**इदं तु व्याकरणाध्ययनं नित्यं कर्मावश्यकं कर्तव्यमुपनयनादिवत् ।**[२]

अस्यावश्यकस्य व्याकरणाध्ययनस्य वेदरक्षैव प्रयोजनम्; यथोक्तं महाभाष्यकारेण "रक्षार्थं वेदानामध्येयं व्याकरणम्"[३] इति । अनेन वाक्येन महाभाष्यकारेणेदं सुदृढीकृतं यत् वेदरक्षामतिहाय व्याकरणाध्ययनस्य नान्यत्रयोजनम् । प्रासङ्गिकस्यानुकूलस्यार्थस्य संरक्षणमपायपरिहारो वा रक्षा[४]शब्दवाच्यः ।

वेदस्य प्रधानरूपेणोपयोगो यागकर्मण्येव भवति । यथोक्तम् "वेदा हि यज्ञार्थमभिप्रवृत्तेति । तत्र कस्य मन्त्रस्य प्रयोगः कस्मिन् यज्ञे भविष्यति कुत्र वा न भविष्यति, इत्यस्य विनिश्चयो मन्त्रस्थानां पदानां स्वरूपेण व्याकरणधिया सम्यक्तया परिचित एव विद्वान् कर्तुं शक्नोति, न त्ववैयाकरणः ।

यथा ऋग्वेदे खिल[५] मन्त्रेषु पीवोपवसनशब्दः समागतः । अस्य सान्तस्य पीवस्शब्दस्थस्य सकारस्य लोपे कृते सति गुणसन्धि विधाय पीवोपवसनशब्दः "पीवोपवसनादीनां छन्दसि लोपः'[६] इत्यनेन वार्तिकेन प्रसिद्ध्यति । इमं लोपविधिमजाननवैयाकरणः कथं वेदार्थं करिष्यतीति चिन्तनीयम् । अतो व्याकरणेनैव वेदार्थाः स्पष्टीभविष्यन्ति ।

अनेनैव प्रकारेण 'दिवो सुपर्णो गत्वाय'[७] इत्यस्मिन् मन्त्रे 'क्त्वो यक्'[८] इत्यनेन सूत्रेण 'गत्वा' इत्यस्यानन्तरं युकागमं कृत्वा गत्वायेति शब्दो निष्पद्यते । अवैयाकरणो गत्वायेत्यस्य शब्दस्य प्रकृतिप्रत्ययात्मकं व्युत्पत्तिमूलकमर्थं कथं ज्ञास्यति ? तथैव 'गृह्णाति' इत्यस्मिन् पदे 'हृग्रहोर्भश्छन्दसि'[९] इत्यनेन सूत्रेण 'ह्' इत्यस्य स्थाने भकाररूपो वर्णविकारो भूत्वा गृभ्णातीति वैदिकः शब्दः प्रसिद्ध्यति । अत्र अवर्णविकारज्ञो हि वैदिकशब्दानां व्युत्पत्तिमूलकमभीप्सितार्थमजानन् महदनर्थं करिष्यति । अत एव महाभाष्यकारेणाभिहितम्—

**लोपागमवर्णकारज्ञो हि सम्यक् वेदान् परिपालयिष्यति**[१०] इति ।

---

१. सर्वदर्शनसंग्रहः पृ० सं० २९२

२. दीपिका, पृ० १०

३. महाभाष्यम्, प्र० आ०, पृ० ९

४. सतोऽर्थस्यापायपरिहारो रक्षा, (दीपिका, पृ०-५)

५. ऋ.सं.५/७/२, इदानीं खिलान्युच्यन्ते क्वचित्विनियोगानुक्तेः, महीधरभाष्ये, शु० यजु० सं० २६/१

६. वार्तिक.६/३/१०९

७. ऋ.सं.८/१०/८

८. पा० सू०, १०/१/४७

९. पा० सू०, ८/२/३२

१०. म० भा०, प्र० आ० पृ०, ९

पुनश्च वैदिकयागेषु प्रकरणानुसारं विकृतिषूहः[१] नूतनशब्दकल्पनं भवति । ऊह-वितर्के धातुना ऊहशब्दो निष्पद्यते । अतोऽन्वययोग्यानां विभक्त्यादीनां प्रकल्पनमोहः । यतो हि वेदे सर्वैः लिङ्गैः सर्वाभिर्विभक्तिभिश्च मन्त्रा न निगदिताः सन्ति । प्रकृति[२]यागे तु समग्रविधिविधानं दरीदृश्यते, परन्तु विकृतियागेषु केवलं विशेषविधानमेवोच्यते । अवशिष्टान्यतिरिक्तानि कर्माणि तु प्रकृतियागादेवातिदिश्यन्ते । अत एव विकृतियागेषु प्रकृतियागगतानां मन्त्रस्थानां पदानां विभक्तिलिङ्गादीनां विपरिणामो ह्यावश्यकतानुसारेण क्रियते । अत्र हि मीमांसाशास्त्रस्य निर्देशो यत्-"यत् प्रकृतौ कर्तव्यम्, तद्विकृता[३]विति" ।

इष्टियागानां प्रकृतिर्दर्शपूर्णमासः, सोमयागानाञ्च प्रकृतिरग्निष्टोमः । तत्र दीक्षणीयादिषु इष्टियागविकृतिषु वाजपेयादिषु सोमयागविकृतिषु चोहो भवति । अयमूहोऽष्टविधो यथोक्तं कुमारिलभट्टपादेन—

"तथोहोष्टविधः । क्वचित्प्रकृतिः ऊह्यते क्वचित् लिङ्गमूह्यते क्वचित्वचनमूह्यते क्वचित्प्रकृतिश्च लिङ्गञ्च क्वचित्प्रकृतिवचने क्वचिल्लिङ्गवचने क्वचित्त्रयाणामपि क्वचिदभ्यासः" ।[४]" इति ।

प्रकृतियागे 'अग्नये जुष्टं गृह्णामि'[५] इति दर्शपूर्णमासे विहितो मन्त्रः । विकृतियागे तु 'सौर्यं चरं निर्वपेत् ब्रह्मवर्चसकामः' इति विहितमस्ति । अतोऽस्मिन् विकृतियागे सौर्ये चरौ 'सूर्याय जुष्टं निर्वपामि' इत्येवं 'अग्नये' इत्यस्य पदस्य स्थाने पदान्तरस्य प्रक्षेपः कार्यः । अयमेव पदान्तरप्रक्षेपः ऊहशब्दाभिधेयः यथोक्तम्—

"अग्नये जुष्टं निर्वपामि" इत्यस्य सौर्ये चरौ 'सूर्याय जुष्टं निर्वपामि' इत्येवं पदान्तरप्रक्षेपः ऊहः"[६] इति ।

अनेनैव प्रकारेण लिङ्गस्याप्यूहः दरीदृश्यते । यथा स्त्र्यर्थाभिधाने 'जूरसि धृता मनसा' इत्यत्र धृतेति पदं पुल्लिङ्गस्य 'धृतः' इत्यस्य पदस्योहो विद्यते । तथैव 'आशासाना मेधपतिभ्यो मेधमित्यत्र विभक्तेरप्यूहो दरीदृश्यते । नूनमेवायमूहोऽवैयाकरणः कर्तुं न शक्नोति । अतो व्याकरणं नूनमेव वेदार्थमुपकरोति, यथोक्तमन्नम्भट्टेन—

'मेधपतिभ्यः इत्यादेः वेदे प्रयोगस्य दुर्ज्ञानत्वात्तदनुसन्धानविलम्बाच्च व्याकरणादेवोहः सुलभ इति भावः[७]" इति । ऊहज्ञो वैदिको ह्यार्त्विज्यलाभेन यज्ञे विपुलं धनमपि प्राप्नोति । अनेन प्रकारेण वित्तलाभेन तस्मै ऐहिक- सुखप्राप्तिरपि भवति ।[८] अतो नूनमेवोहस्य ज्ञानं वेदार्थस्य कृते आवश्यकम्, यतोहि न शक्नोत्यवैयाकरणः सम्यगूहः कर्तुम् । यथोक्तम् महाभाष्यकारेण-'तन्नावैयाकरणः शक्नोत्यथायथं विपरिणमयितुम्[९]'इति ।

---

१. यत्र विशेषाङ्गमात्रमुपदिश्यतेऽङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते सा विकृतिः महीधरभाष्ये शु० य० वेद-१/१
२. यत्रसमग्राङ्गोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादिः, तत्प्रकरणे सर्वाङ्गपाठात् । अ० सं० पृ०-५३
३. शाबर भा० ९/३/१
४. टुप्टीकायाम्, कुमरिलभट्टः ९/३/१
५. शु० यजु० सं० १/१०
६. जै० न्या० वि०, २/१/९
७. अन्नम्भट्टः, उद्योतने, पृ० १३
८. 'ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् । नागेशः, उद्योते पृ०-१४
९. महाभाष्यम्, प्र० आ० पृ० ११

पुनश्च व्याकरणमेव वैदिकानां पदानां ज्ञानं सरलतया लघुरूपेण कारयति । तत्रेदं कारणं यत् बहवः शब्दा विद्यन्ते, अत्यल्पञ्च जीवनमस्ति । अतः कोऽपि जन्मजरामरणग्रस्तो मानवः प्रतिपदमधीत्य शब्दवारिधेः पारं गन्तुं न शक्नोति । स्थितौ ह्यस्यां व्याकरणमेव सरलतमः उपायः उपदिशति, येनात्यल्पकालेनैव वैदिकानां पदानां सम्यक् ज्ञानमत्यल्पपरिश्रमेण च भवति । यथा स्वरविषय एवावलोकयतु, 'अनुदात्तं पदमेकवर्जम्'[१] इत्यनेन सूत्रेणेदं ज्ञायते यत् स्वरितमुदात्तं वाचमेकं वर्जयित्वा पदस्थाः सर्वे अचोऽनुदात्ता भवन्ति । अनेन सूत्रेण सरलतयानुदात्तस्य स्वरस्य विषये ज्ञानं भवति । तथैव विभक्तिविषये लिङ्गविषये वा व्याकरणकृतस्यावबोधस्य लघुता सरलता वा दरीदृश्यते । शब्दानां प्रतिपदं पाठस्त्वशक्य एव । यतो हि पुरा देवानां गुरुः बृहस्पतिर्दिव्यवर्षसहस्रमिन्द्राय शब्दानां प्रतिपादमुपदेशं चकार । परन्तु बृहस्पतिरपि शब्दान्तं न जगाम । बृहस्पतिसदृशो वक्ताध्येता चेन्द्रस-दृशोऽपि दिव्यवर्षसहस्रकाले शब्दवारिधेः पारं न जगाम, तर्हि जरामृत्युजालबद्धानां सामान्य-मानवानां का कथा ? यथोक्तं सायणाचार्येण ऋग्वेदभाष्यभूमिकायाम्—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम ।....अद्य तु पुनर्यदि परमायुर्भवति स वर्षशतं जीवति । तत्र कुतः प्रतिपदपाठेन सकलपदावगमः"[२] इति ।

अतः शब्दानां प्रतिपदपाठापेक्षया प्रकृतिप्रत्यययोरवबोधेन व्याकरणं समग्राणां वैदिकपदानां सम्यक्ज्ञानं सरलतया कारयति । इदमेवानुमोदयन् श्रीमताचार्यवरेण नागेशभट्टेनोक्तम्-'लाघवं च प्रतिपदपाठापेक्षया प्रकृ-त्यादिविभागेनान्वाख्यातस्य विवक्षितम्'[३] इति । अतो वेदार्थज्ञानं प्रति व्याकरणमेव लघूपायं दर्शयति । यतो हि श्लिष्टान् वैदिकपदान् प्रकृतिप्रत्यययोरज्ञानेन विकलोऽवैयाकरणः छेत्तुं पृथक् कर्तुं वा न शक्नोति । व्याकरणाध्य-यनेनैव शब्दार्थज्ञानं सुकरं भवति । अतो नूनमेव व्याकरणं विना पदपार्थक्यावबोधाभावात् यथार्था वेदार्थप्रतीति-र्नहि भवितुं शक्नोति । व्याकरणं वेदार्थज्ञानं प्रति लघूपायभूतमितिसमर्थयन् भर्तृहरिणा दीपिकायामुक्तम्—

'तेषां च ज्ञाने व्याकरणादन्यो लघूपायो नास्ति । उपायो नाम कार्यनिवृत्तिं प्रति यः कारणानां विन्यासवि-शेषः । तस्मात् व्याकरणं लघूपायः शब्दज्ञानं प्रति अन्य उपाय एव न सम्भवतीति ।'[४]

वैदिकानां 'पदानामर्थनिर्धारणे प्रायः सन्देहो जागर्ति । अतस्तत्रत्यानां संदेहानां निवृत्यर्थं व्याकरणस्य ज्ञानमावश्यकमस्ति । स्थलविशेषेषु बहूनि समासयुक्तानि पदानि दृश्यन्ते, येषु पदेषु कः समास इति निश्चेतुं स्वरज्ञानमावश्यकं विद्यते । यथा "स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति कर्मकाण्डिनः पठन्ति । अग्नये वरुणाय च स्थूलपृषतीं धेनुमालभेत, इत्यस्याभिधेयार्थः । परन्त्वायं सन्देहो जागर्ति यत् स्थूलपृषतीशब्दस्य कोऽभिप्रायः ? स्थूलपृषतीशब्दस्य स्थूला चासौ पृषतीति कर्मधारयसमासे कृते सति सैव धेनुर्गृह्यते या स्थूलापि स्याद्बिन्दुक्तापि च । अस्यैव स्थूलपृषतीपदस्यातो विपरीतं 'स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति बहुब्रीहि-समासे कृते इत्यत्र सैव धेनुगृह्यते या स्थूलविन्दुयुक्ता स्यात् । शरीरेण सा स्थूला भवेद्दुर्बला वेत्यत्र न कोऽपि

---

१. पा० सू०-६/१/१५१

२. ऋ० भा० भू०, पृ०-१२३

३. उद्योत, पृ०-१६

४. दीपिका. पृ. सं. १०

निर्बन्धविशेषः, परन्तु नूनमेव बपुषि स्थूलबिन्दुयुक्ता भवेत्। एवञ्चात्र सन्देहो जायते यत्स्थूलविन्दुयुक्ताया धेनोर्ग्रहणं भवेदुताहो स्थूलाया विन्दुयुक्तायाश्चापि। अनेन प्रकारेण यथार्थनिर्धारणे विचिकित्सायां सत्यां व्याकरणधियैव समाधानं सम्यक्तया कर्तुं शक्यते। यद्यत्र स्थूलपृषतीपदमन्तोदात्तं नहि विद्यते, तर्हि कर्मधारय-समासाभावात्स्थूलाया विन्दुयुक्तायाश्चापि धेनोर्ग्रहणं नहि भवितुं शक्नोति। अपितु पूर्वपदे प्रकृतिस्वरमवलोक्य बहुव्रीहिसमासत्वात्स्थूलबिन्दुमत्या एव धेनोग्रहणं सुनिश्चितं भवति। यथोक्तं भर्तृहरिणा दीपिकायाम्—

"स्वरभेदार्थभेदं वैयाकरणाः प्रतिपद्यन्ते। तस्मिंश्च कर्मणि यस्याः स्थूलानि पृषन्ति लभ्यन्ते तत्र वैयाकरणैस्त्वसन्देहेन पूर्वपदप्रकृतिस्वरेण बहुव्रीहिरेवात्र निश्चित इति।"[१] अतो व्याकरणस्य ज्ञानं वेदार्थसन्देहनिवृत्तौ परमावश्यकं विद्यते। यदि व्याकरणज्ञानं विना कोऽपि जनो वेदार्थं प्रति प्रयतते तर्हि सन्देहजालाकुलस्य तस्य श्रमो निरर्थक एवास्ति। यथोक्तं सायणाचार्येण वेदभाष्यभूमिकायाम्—'असन्देहार्थं चाध्येयं व्याकरणम्। नावैयाकरणः स्वरतोऽध्यवस्यतीति।'[२]

यज्ञे कर्मविच्छेदे जाते सति पुनराधेयेष्टिः क्रियते। तदानीमादौ ह्यग्नये प्रास्ताः पञ्चाहुतयः प्रयाजाः।[३] पुनश्चान्तेऽपि प्रास्तास्तिस्त्र आहुतयोऽनुयाजसंज्ञकाः। प्रयाजा अनुयाजाश्चाग्नेया एव भवन्ति, यथोक्तं यास्काचार्येण—"आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति ब्राह्मणम्"[४] इति। तत्र प्रथमा समिधोऽग्न आज्यस्य व्यन्तु, द्वितीया तनूनपादग्न आज्यस्य वेतु, तृतीया इडोऽग्न आज्यस्य व्यन्तु, चतुर्थी बर्हिरग्न आज्यस्य वेतु, पञ्चमी स्वाहग्न आज्यस्य वेत्विति चाहुतयः प्रयाजाः सन्ति। अत्रायं नियमो यदन्तिमं पञ्चमं मन्त्रम्[५]पहाय चतुर्षु प्रयाजमन्त्रेषु समागतस्यग्निशब्दस्य चतस्रो विभक्तीः परिणमयितव्याः। एवमग्निशब्दस्य सविभक्तिकमुच्चारणे कृते सति प्रथमः समिधोऽग्ने अग्न आज्यस्य वियन्तु, द्वितीयस्तनूनपादग्नावग्न आज्यस्य वेतु, तृतीय इडोऽग्निनाग्न आज्यस्य वियन्तु, चतुर्थो बहिरग्निमग्न आज्यस्य वेतु इति विभक्तिपरिवर्तने कृते सति मन्त्रो भवति। एवमत्र प्रथमासम्बोधने सप्तम्यां तृतीयायां द्वितीयायाञ्च विभक्तिपरिवर्तनं दरीदृश्यते, यथोक्तमापस्तम्बश्रौतसूत्रे—

"अग्नाग्ने अग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तिर्दधाति"[६] इति। अतो ह्येवंविधेषु स्थलविशेषेषु विभक्तिपरिवर्तनद्वारा व्याकरणं वेदार्थं प्रत्युपकरोति। व्याकरणस्य सम्यक् ज्ञानं विना न कोऽपि वैदिकः प्रयाजमन्त्राणां विभक्तिपरिवर्तनं सम्यक्तया कर्तुं शक्नोति। अत एवोक्तं महाभाष्यकारेण—"न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्"[७] इति।

---

१. दीपिका, पृ०-१०

२. ऋ० भा० भू०, पृ०-१२४

३. प्रधानयागात्पूर्वमिज्यते यैस्ते प्रयाजाः

४. निरुक्ते, अ० ८/३ पुनश्च तव प्रयाजा अनुयाजांश्च केवलानूर्जस्वन्तो हविषः सन्तु भागाः। तवाग्नि यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्त्रः॥ ऋ० वेद० १०/५१/९

५. 'नोत्तमे' आ० श्वौ० सू० ५/८/१८/७

६. आ० श्रौ० सू०-५/८/२८/६

७. म० भा० प्र० आ०-पृ०-२३

अतएव यः पदशोऽक्षरशस्स्वरश्च वेदं व्याकरणधिया जानाति, तस्यैव याजनेऽधिकारो विहितोऽस्ति न त्वज्ञस्य।[१] अज्ञेनावैयाकरणेनोच्चरिता वेदमन्त्रा हीष्टप्राप्त्यनिष्टपरिहाररूपं स्वार्थं नोत्पादयन्ति। अतो यागकर्मणि प्रेप्सितार्थप्राप्तिद्वारा व्याकरणं नूनमेव वेदार्थमुपकरोत्येव। वैदिकयागेषु विदुष एवाधिकारः, यथोक्तं भर्तृहरिणा दीपिकायाम्—'विद्वानेव याजयति, इत्यविदुषोऽनधिकारात्'[२] इति। विद्वानेव याजयतीति कथनस्यायं भावो यत् विद्वानेवैकस्य शब्दस्य स्वरभेदेन पदच्छेदेन वार्थवैविध्यं ज्ञास्यति। यथा द्विविधो हि वेदशब्दो वेदेषूपलभ्यते। एको वेदशब्दो विद्ज्ञाने धातुना अच् प्रत्यये कृते सति निष्पद्यते। अतः 'चितः'[३] इत्यनेन सूत्रेण सोऽन्तोदात्तः प्रयुज्यते। तस्यान्तोदात्तस्य वेदशब्दस्य कुशमुष्टिरित्यभिप्रायः। यथा—'वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः'[४]"इत्यस्मिन् मन्त्रे कुशमुष्टिवाचकस्यान्तोदात्तस्य वेदशब्दस्य प्रयोगो दृश्यते।

द्वितीयश्च वेदशब्दो विद्धातुना घञ् प्रत्यये कृते निष्पद्यते। अतः घञ्प्रत्ययत्वात्तत्र 'ञ्नित्यादिर्नित्यम्'[५]' इत्यनेन सूत्रेणाद्युदात्तो भवति। यथा—"वेदहामेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"[६] इत्यस्मिन् मन्त्रे आद्युदात्तस्य वेदशब्दस्य प्रयोगोऽवलोक्यते। एवं विधेषु स्थलविशेषेषु प्रत्ययस्वरयोरज्ञानादवैयाकरणोऽर्थ-प्रत्ययं सम्यक्तया कर्तुं नहि शक्नोति। अतो वेदार्थेषु व्याकरणोपकारिता स्यादेव।

वेदानां पदपाठेऽपि व्याकरणज्ञानं विना पदच्छेदोऽसंदिग्धतया न भवितुं शक्नोति। यथा—"अवसाय पद्वते रुद्रमृड," "अवसायाश्वान्' इत्युभयोरपि मन्त्रयोरवसायशब्दस्य समानरूपेण प्रयोगो दृश्यते। परन्त्वत्रार्थ-वैविध्यमस्त्येव। "अवसाय पद्वते रुद्र मृड" इत्यस्मिन् मन्त्रे समागतस्यावसायशब्दस्यार्थः पथ्यदनमस्ति। यतो ह्ययमवसायशब्दः 'अव्'गत्यर्थेन धातुना असुप्रत्यये कृते सति चतुर्थ्यन्तरूपोऽस्ति।[७] अतोऽत्र पदसंविभागो नहि भवति। द्वितीयश्चावसायशब्दः 'अव'उपसर्गकिन षोडन्कर्मणि धातुना क्त्वाप्रत्ययस्य स्थाने ल्यप् प्रत्यये कृते सति निष्पद्यते। अतोऽस्यावसायशब्दस्यात्र वियोज्य इत्यभिप्रायोऽस्ति। अतो ह्यत्र पदसंविभागो भवति। अनेनैव प्रकारेण "दूतोनिरृत्या इदमाजगाम" इत्यस्मिन् मन्त्रे समागतं निरृत्या इति पदं आःकारान्तं पञ्चम्यर्थे षष्ठ्यर्थे वा विद्यते। परन्त्वतो विपरीतं "परो निरृत्या आचक्ष्व"[८] इत्यस्मिन् मन्त्रे समागतं 'निरृत्या' इति पदं निरृत्यै इत्यस्य स्थानीयमस्ति। निरृत्यै आचक्ष्व इत्यत्र 'एचोऽयवायावः'[९] इत्यनेन सूत्रेण अवादेशे 'लोपः शाकल्यस्य' इत्यनेन सूत्रेण वकारस्य लोपे च कृते सति उक्तं रूपं प्रसिद्ध्यति। अत एव ऐकारान्तोऽत्र पदसंविभागो भवति। एवमुभयत्र निरृत्येति पदं समानमेव दरीदृश्यते, परन्त्वत्र विभक्त्यर्थवैविध्यं व्याकरणशास्त्रमेवाबोधयति। एवं विधेषु

---

१. यो वा इमां पदशः स्वरशोऽक्षरश्च वाचं विदधाति स आर्त्विजीनो भवति। महाभाष्ये, प्र० आ० पृ०—२५
२. दीपिकायां प-०-१६
३. पा० सू०-६/१/६३
४. शु.य.सं. ३१/१८
५. पा० सू० ६/१/१९७
६. शु० य० सं० ३१/१८
७. निरुक्ते, अ० १/६
८. ऋ.सं. १०/१६५/१
९. पा० सू०, ६/१/७८

विभक्त्यर्थवैविध्येषु सत्सु कस्यार्थस्य ग्रहणं भविष्यति, कस्यार्थस्य वा ग्रहणं नहि भविष्यति इत्यस्य संदेहस्य निर्णयो निरुक्तशास्त्रेणैव कर्तुं शक्यते। एवं विधेषु संदेहास्पदेषु स्थलविशेषेषु व्याकरणस्य गतिर्नहि प्रसरति। वेदार्थं प्रति निरुक्तशास्त्रस्येदमेवाप्रतिमं महत्त्वं द्योतयन् श्रीमता यास्काचार्येणोक्तम्—

"तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च"[१] अयमेव व्याकरणनिरुक्तयोर्मध्ये विभेदः। व्याकरणस्यान्यो विषयो निरुक्तस्य चान्यः। यद्यप्यद्यश्वो व्याकरणेन हि कवलितं निरुक्तम्। तथापि शास्त्राणां पिण्डीकरणं नोचितम्। अवैयाकरणस्त्वेवंविधेषु स्थलविशेषेषु विभक्त्यर्थवैविध्यं ज्ञातुं न शक्नोति। विभक्त्यर्थस्य वैविध्यज्ञानं विना यथार्थावगाही पदविभागो भवितुं न शक्नोति यथार्थपदविभागं विना मन्त्रार्थप्रतीतिस्तु सर्वथाप्यसम्भवैव। अत एव वेदार्थं प्रति व्याकरणस्योपकारितां ऋगेवानुमोदयति—

**चत्वारि वाक् परिमिता पदानि,**
**तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति,**
**तुरीयं वाचो मनुष्या वदन्ति**[२] ।। इति

अत्रेदमुद्घोषितम् यत् नामाख्यातोपसर्गनिपातस्वरूपाणि चत्वारि पदजातानि ये जानन्ति त एव विद्वांसो, न त्वन्ये शुकवत्पाठकारिणोऽनर्थज्ञाः। यतो हि ये वेदमधीत्य स्वाधीतस्य वेदस्यार्थं न जानन्ति, तान्, ऋगेव निन्दति, येऽर्थज्ञास्तान् स्तौति च, यथोक्तम्—

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।।**[३] इति

अतो व्याकरणज्ञानपूर्वकं वेदार्थज्ञानमावश्यकमिति वेदसमर्थितमेवास्ति। यद्यपि बहूनां वेदानामानर्थक्यवादिनां[४] हृदि वेदार्थविचारणेयं न स्तोकमपि पदं विदधाति, तथापीदं सुस्थितमवितथञ्च यद्वेदार्थे व्याकरणाङ्गोपकारित्वं दुर्निवारमेवेति।

---

१. निरुक्ते १/५

२. ऋ० सं०, १/१६४/४५

३. उद्धृतम्, निरुक्ते १/६

४. अनर्थका हि मन्त्राः, निरु० १/५

# बौद्धार्थवादस्य महाभाष्यकृदनभिमतत्त्वम्

■ श्रीराजेन्द्रप्रसादशर्मा

बौद्धार्थवादो महाभाष्यकारपतञ्जलिसिद्धान्त इति केचन वैयाकरणाः प्रतिपादयन्ति। तेषां युक्तिनां बलाबलं समासत्वेनात्र विचार्यते।

'न च सतां पदार्थो व्यभिचरति' इति भाष्यमाधारीकृत्य वाक्यपदीयतट्टीकासु बौद्ध एव अर्थः शाब्दबोधस्य विषयः न बाह्यार्थ इति पतञ्जलिसिद्धान्तः निर्णीतः। स च कैयटनागेशादिभिः प्रदीपे उद्योते च यत्र-तत्र प्रतिपादितः। किन्तु महाभाष्यावलोकनेनायं वादः भाष्यकारसम्मत इति न प्रतिभाति। तत्र तु अयम् आरोपित एव प्रतिभाति।

अष्टाध्यायीमहाभाष्यादिग्रन्थावलोकनेन ज्ञायते हि व्याकरणं खलु शब्दसाधुत्वव्यवस्थापकं शास्त्रम्, अर्थ- व्यवस्था तु लौकिकव्यवहाराधीना।[1] तस्मादर्थसत्तानिर्णये न्यायमीमांसादिशाब्दबोधव्यवस्थापकशास्त्राणां लौकिकव्यवहारस्य चानुमतिरनिवार्या। नैते बौद्धार्थं स्वीकुर्वन्ति, न चापि सूत्रकारः पाणिनिः। शाब्दिकपरम्परायाः मूलं भगवतः पाणिनेः कृतिरष्टाध्यायी। अस्यां सूत्रबद्धायां नियमश्चकास्ति ह्यतिलाघवेनोपायेनाल्पाक्षरैः व्याकरणशास्त्रीयज्ञानस्य प्रतिपादनम्, न हि अत्र प्रयुक्तानां सर्वेषां शब्दानां शास्त्रीयार्थव्याख्यानं लाघवदृष्ट्या महर्षिणा कृतम्, अतो यत्र यत्र सूत्रे प्रयुक्ता बहवः शब्दाः शास्त्रीयार्थविरहिता आहोस्वित् शास्त्रकारकृतव्याख्यानविहीनाः समुपलभ्यन्ते तत्र तत्र तेषामर्थो लौकिकोऽर्थ एवेति समुद्घोषयन्ति सर्वे शास्त्रविदः। यथा शास्त्रप्रयुक्ताः 'अनन्तर-तुल्य-समाहार-स्वरूप-उपदेश-न-पर-पूर्व-अर्ध' इत्यादयः। एषामर्थः शास्त्रीयप्रक्रियाव्यवहारे आवश्यकोऽपि सन् शास्त्रकारेण संज्ञासूत्रमुखेन न प्रतिपादितः, शास्त्रीयार्थविरहे लोकसिद्धानां सामान्यानामेषां शब्दानां सर्वशास्त्रव्यापको लोकप्रसिद्धार्थः स्वीकर्तव्य इति सर्वमान्यः।

एवमेव ११५ पाणिनिसूत्रेषु गृहीतोऽर्थःशब्दोऽपि शास्त्रीयार्थव्याख्यानविरहितः, अतः शास्त्रीयार्थव्याख्यानप्रतिपादनरहितस्य अर्थपदस्य अर्थो लौकिकः इति पूर्वकथितसिद्धान्ताश्रयेण सिद्धम्। लोके सर्वाणि कार्याणि व्यवहारश्च बाह्यपदार्थे संघटन्ते, अतो बौद्धार्थोऽसिद्ध इति सिद्धम्। तथापि अर्थपदप्रयुक्तानां ११५ सूत्राणां उपलब्धपारम्परिकवृत्त्यादिग्रंथसहाय्येन बाह्यार्थ एवं प्रस्फुटितो भवति न कुत्राऽपि बौद्धार्थः।

बौद्धः शब्दः, बौद्ध अर्थ इति बौद्धार्थवादिभिः (स्फोटवादिभिः) उच्यते, तत्सिद्धये तन्मते सत्ता द्विविधा बाह्यौपचारिकभेदात्। तथा च शास्त्रप्रक्रिया लोकप्रक्रिया च बौद्धशब्दार्थाभ्यां निर्बाह्यत इति बौद्धार्थवादि

१. पाणिनिसूत्रम्, १२५६ महाभाष्यम् १.३

(स्फोटवादि) मताशयः । अत्रेदं वक्तव्यं किमिदं मतं मुनित्रयसम्मतं नवेति समीक्ष्य निर्णेतव्यम् । तत्र बौद्ध (स्फोट) शब्दार्थवादी आह-शब्दार्थौ बौद्धौ मुनित्रयशास्त्रसिद्धत्वात् (हेतुमति च, परः सन्निकर्षः संहिता, उपदेशेऽजनुनासिक इत्, नञ्, स्त्रियाम्, तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रभाष्यसिद्धत्वात्)

अथोच्यते-उक्तसूत्रभाष्येषु शब्दार्थयोर्बौद्धत्वं कुत्रापि सुस्पष्टं नैवोक्तम्, प्रत्युत वाक्यपदीये भर्तृहरिणा शब्दार्थस्वरूपविवेचनविषयमादाय कानिचिद् मतानि संगृहीतानि स्वसमकालिकप्रचलितानि विभिन्नानि मतानि विवेचितानि । किञ्च तानि सर्वाणि भाष्यसम्मतानि इति न क्वापि तेन स्वग्रन्थे उक्तम्, किञ्चातिगंभीराशयस्य भाष्यस्येदं वाक्यपदीयं प्रामाणिकं व्याख्यानमिति लोकप्रवादोद्वेलितबुद्धिभिः कैयटपादैः सर्वं वाक्यपदीयं भाष्य-व्याख्यानं मत्वा बौद्धार्थ-शब्दार्थवादोऽपि भाष्यसम्मत इति प्रौढ्या प्रयतितम् । किञ्च तथापि यत्र तत्र भाष्ये बाह्यौ शब्दार्थौ इत्यगतिकगत्या स्वीकृतावेव ।

तथा चाद्वैतवादित्वात् द्वैतमतवासनया कैयटानुरोधेन च तत्र भवन्तः नागेशभट्टपादा अपि महत्यारभङ्ग्या बौद्धार्थवादं पदपदार्थयोस्तादात्म्यसिद्धये शब्दस्यापि बौद्धत्वं साधयितुं प्रयतितवन्तः, किन्तु सूक्ष्मदृशा तदुक्तम-तसमीक्षया नागेशभट्टाः स्वमतसाधनकर्मणि सफलाः न सिद्ध्यन्ति ।

कथञ्चित्तदुक्तिप्रमाण्यमङ्गीकृत्य शब्दार्थयोर्बौद्धत्वस्वीकारेऽपि शब्दार्थयोः बौद्धार्थसाधकपूर्वोक्तसूत्र-भाष्येण भाष्यान्तरविरोधाद् भगवति भाष्यकृति वदतो व्याघातदोषापत्तेः नागेशकृतस्य स्वमतसाधकव्याख्यान-स्यापव्याख्यानत्वमेव सिद्ध्यति ।

केन भाष्यान्तरेण विरोध इति चेद्, उच्यते स्वरूपमिति (१.१.६८) सूत्रभाष्येण । इदमिह भाष्यम् "गामानय दध्यशानेत्यर्थ आनीयते अर्थश्च भुज्यते" इति । अर्थस्य बौद्धत्वस्वीकारे गलबिलाधः पातनानुकूलहस्तचालनच-र्वणरूपक्रियया बाह्यया कारकान्वयासंभवात्, एवमेवानयानुकूलबाह्यशरीरव्यापाररूपक्रिययाऽपि कारकान्वयासं-भवात्, अत्र भुज्यमान आनयमानश्च बाह्य एवार्थ इति भाष्यकृतामभीष्टः, इति सुस्पष्टं गम्यते ।

ननु यथा कारकरूपोऽर्थो बौद्धः, एवमेव क्रियारूपोऽपि बौद्धः तथात्वे चान्वयः सुगम इत्युच्यते चेत्, तदपि न विचारचारू, शास्त्रीयफलरूपे निष्पन्नेऽपि यद्वा शास्त्रीयप्रक्रियानिर्वाहेऽपि वस्तुतस्तादृशार्थेन बुभुक्षाधनिवृत्तेः शब्दप्रयोग एव कृताकृतः स्यात्, वक्तृप्रयोजनासिद्धेश्च । सर्वस्यापि शब्दप्रयोगस्य वक्तृप्रयोजनसिद्धेश्च । सर्वस्यापि शब्दप्रयोगस्य वक्तृप्रयोजनसिद्ध्यर्थकत्वात् प्रयोजनसिद्धौ, सर्वोऽपि बौद्धशब्दार्थ व्यापारो किञ्चित्करः, अतएव शब्दार्थयोर्बौद्धत्वन्न तर्कसम्मतं नापिमहाभाष्यसम्मतमित्यपक्षपातया धिया बौद्धार्थवादिनाऽपि स्वीकर्त-व्यमेव ।

ननु बाह्य या क्रियया बुभुक्षानिवृत्तेरपि भविष्यति, इत्यपि न वाच्यम् । बाह्यसत्तायाः बौद्धार्थवादिभिर-स्वीकारात् । यथोक्तम्

"एव चानया एव सत्तया (बौद्धसत्तया) पूरिते व्यवहारे यद्यर्थक्रियाकारणादिना काष्ठबुसप्रायेण केनचि-न्निबन्धेनायं सत्ता कल्प्यते, तद्वर्धतां सा, न तत्र चिन्ताऽस्माकम्, व्यवहारे तु तस्या नास्त्यनुप्रवेशः" इति ।[१]

१. हेलराजः ३.७.३९

ननु बाह्यसत्ताया अस्वीकारः शाब्दबोधविचारस्थले एव नान्यत्र इति पस्पशायां शब्दविचारप्राकरणिकभाष्येणैव सिद्धम् । न सिद्धं, प्रतीतपदार्थकः ध्वनिः शब्दः, भाष्याशयानवबोधाद् व्याख्यातारः भ्रान्ताः । वस्तुतस्तु बुद्धिमान्द्यादिदोषरहितत्वे सति संस्कारोद्बोधे न कथमपि व्युत्क्रमो भवति । अतः संस्कारव्युत्क्रमे बुद्धिमान्द्यादेरेव हेतुत्वं न तु स्वरूपसम्बन्धेन संस्कार-व्युत्क्रमः । अतो बौद्धशब्दः, बौद्ध अर्थ इत्यादिकल्पनासाम्राज्यस्यावश्यकतैव नोदेति । न च परमतप्रवेशो वाच्यः । न तु संस्कारोद्बुधः शब्दः नैयायिकस्यैव पक्षः विनिगमनाविरहात् । बुद्धिमान्द्यादिसत्त्वे तु वक्तृबोद्धोरुभयोरपि बौद्धार्थसिद्धान्तस्वीकारेऽपि यथार्थबोधः दुर्लभ एव । नैयायिकवैयाकरणयोः समान एवायं सिद्धान्तः ।

'महाभाष्यकारमतेन शाब्दबोधस्य विषयो बाह्यार्थो न' इति 'तुष्यतु दुर्जन इति न्यायेन यदि स्वीक्रियेत, कथं तर्हि अर्थस्य बाह्य इति विशेषणं तैरग्रलिखितवाक्येषु प्रयुक्तम् अस्मद् सिद्धान्तसमर्थने इमानि भाष्यस्थलान्यपि प्रमाणभूतानि इति विचारयन्तु विद्वांसः ।

१. "न हि तर्हीदानीमिदं भवति पुरुषस्य राजेति ? भवति राजाशब्दात्तु तदा प्रथमा । न तर्हीदानीमिदं भवति राज्ञः पुरुषस्येति भवति बाह्यमर्थमभिसमीक्ष्य"[१]

२. "एषा बाह्यमर्थमपेक्ष्य भवति"[२]

३. "भवति बाह्यमर्थमपेक्ष्य षष्ठी"[३]

४. "भवति बाह्यमर्थमभिसमीक्ष्य"[४]

५. भूम्नाति च लुक्प्राप्ते बाह्ये चार्थे विधीयतेऽजादिः"[५]

अत्र बाह्यमर्थम् इति पदद्वयेन शाब्दबोधस्य बाह्यार्थत्वं भाष्यकृद्भिः स्पष्टमङ्गीकृतमित्यत्र न संशीतिलेशावसरः ।

---

१. महाभाष्यम् २.३.५०,

२. तत्रैव २.२.११

३. " २.२.२४

४. " २.२.५०

५. " ४.१.८९

# वेद कालीन ज्योतिष

■ श्री अरुण कुमार उपाध्याय

शीर्षक की व्याख्या के लिए वेद का अर्थ तथा उसके अंग रूप ज्योतिष की व्याख्या करनी होगी। ज्योतिष की परम्परायें और अंग तथा उनके द्वारा काल की व्याख्या भी इसका उद्देश्य है। तत्त्वरूप में वेद पूरी सृष्टि ही है, उसे ही ब्रह्म, विराट्, पुरुष आदि कहा गया है। ब्रह्म के चार पाद के रूप में उसके चार अंग हैं, जिसे १६ कला के ४ पुरुष या भागवत के पांचरात्र में चतुर्व्यूह कहा गया है। वेद का दूसरा रूप शब्दात्मक है, जो वेद नाम से प्रसिद्ध ग्रन्थों में मिलता है। इसकी प्रत्येक ऋचा किसी ऋषि द्वारा शब्द रूप में प्रकट करना, पौरुषेय है, किन्तु उसका मूल तत्त्व तथा उसके दर्शन की प्रक्रिया अपौरुषेय है। यह विभिन्न तत्त्वदर्शियों द्वारा विभिन्न प्रसंगों की अलग-अलग दिखने वाली व्याख्याओं की एकता के रूप में परम सत्य है। किसी का व्यक्तिगत विचार न होने के कारण भी अपौरुषेय है।

विद् धातु के तीन अर्थों तथा ज्ञान की तीन प्रक्रियाओं के अनुसार वेद का अर्थ त्रयी है अर्थात् ऋक्, यजु, साम विभाग हैं। इसके पूर्व मूल वेद अथर्व है, जो निराकार भेद रहित ब्रह्म की विद्या है। मुण्डकोपनिषद् के प्रथम ५ श्लोकों में पहले अथर्व रूप ब्रह्मविद्या की शिक्षा तथा उसके ४ वेद, ६ अङ्गों में विभाजन का उल्लेख है। शब्द रूप अथर्ववेद में राजनीति, आयुर्वेद शिल्प आदि व्यावहारिक विज्ञान हैं। व्यावहारिक विज्ञान के बाद ही उनका सिद्धान्त या दर्शन स्पष्ट होता है, अत: अथर्ववेद के बाद ही उसके सिद्धान्त तीन रूपों या त्रयी के रूप में प्रकट हुए। अत: त्रयी का अर्थ ४ वेद हुआ, और साहित्य या ज्योतिष में सदा वेद का अर्थ ४ ही होता है।

त्रयी या वेद = मूल अथर्व + ३ सिद्धान्त (ऋक्, यजु, साम)

= मूल ब्रह्म + ३ गुणों के कारण ३ विभाग

= मूल भेद रहित विश्व + मूर्ति, गति, प्रभाव क्षेत्र (तैत्तिरीय ब्राह्मण ३/१२/९/१)

= सनातन ब्रह्म + अग्नि, वायु, रवि रूप ऋक्, यजु:, साम (मनुस्मृति १/१३)

हम किसी वस्तु 'क' को जानते हैं, इसके तीन कारण हैं—

(१) 'क' की सत्ता है। विद् सत्तायाम्, इस अर्थ में पदार्थों की मूर्ति (आकार, प्रकार, रूप, भार आदि) का वर्णन ऋग्वेद करता है।

(२) 'क' से सम्बन्धित कुछ चीज़ शब्द, प्रकाश आदि के माध्यम से हमारी इन्द्रियों तक आती है, जिससे उसका ज्ञान हमें होता है । 'क' की सूक्ष्म रूप में प्राप्ति के कारण विद् का अर्थ प्राप्ति है (विद्लृ लाभे), गति से सम्बन्धित वेद यजुर्वेद हुआ ।

(३) 'क' की जानकारी उससे दूरी पर तभी हो सकती है यदि 'क' का प्रभाव-क्षेत्र (साम) उसके चारों तरफ गुरुत्वशक्ति, प्रकाश आदि के रूप में फैला हो । सूर्य, चन्द्र, पृथ्वी के विभिन्न प्रभाव क्षेत्रों का नाम वृहत्साम, रथान्तरसाम, वैराजसाम आदि है, जिनका वर्गीकरण स्तोम संख्याओं ९, १५, २१ आदि के आधार पर है । साम के कारण ही ज्ञान होता है । अतः कृष्ण ने अपने को वेदों में सामवेद कहा है (गीता १०/२२) इस कारण वेद का अन्तिम अर्थ ज्ञान है (विद् ज्ञाने)

ऊपर की तीनों क्रियायें—स्थिति, गति, ज्ञानवातावरण के कारण है; प्रेक्षा का कारण परिप्रेक्ष्य (दृश्य वस्तु का आवरण) है । वस्तु की स्थिति का कारण है वह चारों तरफ की वस्तुओं से अलग प्रकार का है । गति भी किसी मूल आधार जैसे पृथ्वी या सूर्य के सापेक्ष होती है । ज्ञान भी बाकी ज्ञान समूह से उसे अलग पहचानने में है । ब्रह्मरूपी सबका आवरण अथर्ववेद है ।

**२. ज्योतिष और वेद**—ज्योतिष का अर्थ ज्योतिर्मय पिण्डों की स्थिति का अध्ययन है । इसमें सूर्य एवं नक्षत्र स्वयं प्रकाशित है तथा ग्रह परतः प्रकाशित (तारों से) हैं । यह गणित ज्योतिष सम्बन्धी संकीर्ण अर्थ है । इसमें भी अनन्त तारा मण्डल राशि तथा नक्षत्र विभाजन के आधार के रूप में अथर्ववेद है, सूर्य, ग्रहों उपग्रहों की स्थिति, आकार, दूरी आदि ऋक् रूप है, उनकी गति का वर्णन यजुर्वेद में है तथा उसका प्रभाव (ऋतु, ग्रहण आदि) सामवेद है ।

सृष्टि की रचना ज्योति द्वारा हुई है (ज्योतिषामपि तद् ज्योतिः) निराकार से आरम्भ कर ७ लोक ओर १४ भूत सर्ग तक की रचना का सिद्धान्त भी ज्योतिष ही है । आधुनिक खगोल विज्ञान में सिर्फ आकाशीय पिण्डों के बारे में अध्ययन होता है । पृथ्वी का अध्ययन भूगर्भशास्त्र, जीवों का अध्ययन जीवविज्ञान (जन्तु तथा वनस्पति दो भेद) तथा मनुष्यों का अध्ययन (आयुर्वेद) है । सृष्टि क्रम की व्याख्या संहिता है । एक ही क्रम तथा व्यवस्था का भाग होने के कारण जीव जगत की घटनायें आकाशीय पिण्डों पर आधारित हैं, इसका अध्ययन फलित ज्यतिष में है ।

सृष्टि रचना का क्रम, उसका आकार-प्रकार, क्रिया सभी कुछ विस्तार से जानने के लिए ज्योतिष की आवश्यकता है । वृद्धवशिष्ठसिद्धान्त (१/५-७) में वेद के अंगों में ज्योतिष को वेदपुरुष का नेत्र कहा है । इसकी व्याख्या भास्कराचार्य ने सिद्धान्त-शिरोमणि (१/९-१२) में की है—वेद यज्ञकर्म पर आधारित है तथा यज्ञकाल पर जिसकी गणना ज्योतिष से होती है अतः ज्योतिष वेद का आधार है । यह पंचांग गणना सम्बन्धित ज्योतिष का सीमित अर्थ है । वेदांग ज्योतिष के नाम से प्रसिद्ध ऋक् तथा यजुष् ज्योतिष इसी का वर्णन करते हैं । काल वर्णन ज्योतिष के गति वर्णन का भाग है (गति = दूरी ÷ काल) काल का भी अर्थ देखा जाये तो उसके दो अर्थ सूर्यसिद्धान्त (१/१०) में वर्णित है । एक काल का अर्थ है— मृत्यु, जो संसार का नाश करता है । यह भगवद् गीता में वर्णित क्षर ब्रह्म का ही वर्णन करता है । दूसरा काल जन्य काल है जो आवर्ती या चक्रीय गतियों द्वारा

मापा जाता है, जैसे पेण्डुलम् द्वारा सेकण्ड, पृथ्वी के अक्षभ्रमण से दिन, चन्द्रभ्रमण से मास आदि । प्रयोग तथा गणना सम्बन्धी आधुनिक या प्राचीन ज्योतिष मुख्यत: क्षरब्रह्म का ही वर्णन करते हैं किन्तु सृष्टि की उत्पत्ति का क्रम समझने के लिए परात्पर, अव्यय तथा अक्षर ब्रह्म का भी ज्ञान आवश्यक है । ये तीन पाद पुरुष सूक्त तृतीय ऋक् के अनुसार द्यु में अदृश्य और अमृत हैं ।

पुरुष सूक्त सम्बन्धी सम्पूर्ण सृष्टि विज्ञान की व्याख्या सूर्य सिद्धान्त अध्याय १२ के १२ श्लोकों (१२-२३) में है—सूर्य के प्रभाव या साम रूप आदित्य वेद में १२ प्रकार के हैं । इस प्रकार सूर्य सिद्धान्त वर्तमान उपलब्ध शास्त्रों में वैदिक-ज्योतिष का पूर्णतम रूप है । इसमें पुरुष सूक्त की भाषा और तत्त्व के अतिरिक्त सांख्य प्रतिपादित २५ तत्त्व तथा भागवत वर्णित ४ व्यूह (वासुदेव, संकर्षण, प्रद्युम्न और अनिरुद्ध) की व्याख्या है । यह वेद सम्मत भागवत का आधिदैविक अर्थ है । आधिभौतिक अर्थ में ऐतिहासिक धारणाओं या क्षेपकों के कारण जो कुरीतियां आयी उनका स्वामी दयानन्द ने भागवतखण्डनम् में खण्डन किया है । किन्तु ज्योतिषीय अर्थ प्राय: पुरुष सूक्त ही है, यह सूर्य सिद्धान्त से स्पष्ट है ।

वेद-भागवत-ज्योतिष समन्वय माण्डूक्य उपनिषद् में वर्णित ब्रह्म के ४ पादों का वर्णन पुरुष सूक्त प्रसंग में भागवत के पदों के साथ दिया जा रहा है । यह विरोधी नहीं, पूरक है ।

१. शिव अद्वैत पाद (परात्पर)—यह लक्षण हीन, प्रज्ञा हीन, अदृष्ट, अचिन्त्य आदि है । भागवत के अनुसार यह वासुदेव (द्यु का वास या स्थान मात्र है)

२. प्राज्ञ (अव्यय)—विज्ञान, आनन्दमय है । अव्यय का अर्थ इसकी ५ प्रकार की कलाओं का पूर्ण योग स्थिर है । भागवत के अनुसार यह संकर्षण है, अर्थात् आकर्षण के कारण पिण्डों की रचना और उनकी परस्पर स्थिति है ।

३. तैजस् (गीता का अक्षर)—यह अन्त:प्रज्ञ है, अक्षर रूप में कूटस्थ या व्यक्ति रूप में परिचय मात्र है जो स्थिर रहता है । भागवत के अनुसार यह प्रद्युम्न अर्थात् ज्योति वाला है । प्रत्येक पदार्थ अपनी प्रकृति के अनुसार प्रभाव, ज्योति आदि फैलाता है ।

४. वैश्वानर (क्षर)—यह दृश्य जगत् है जिसका हर रूप धीरे-धीरे नष्ट होता जाता है । इसे भागवत में अनिरूद्ध (अनन्त रूप वाला) कहा गया है । अनन्त रूपों को १४ सर्ग या भुवन में वर्गीकरण किया गया है जिसकी पूजा अनन्तचतुर्दशी को होती है । पुरुष सूक्त की तृतीय ऋक् में उल्लेखकर १६ वें ऋक् तक १४ ऋचाओं में इसका वर्णन है ।

**३. वेद और जैन ज्योतिष**—जैन दर्शन को वेद बाह्य तथा कभी-कभी वेद विरोधी भी माना जाता है । इसे वेद सम्मत कहने से जैन तथा सनातनी दोनों नाराज होंगे । ब्रह्मगुप्त और भास्कराचार्य ने जैन ज्योतिष को भी बौद्ध मानकर बौद्ध सिद्धान्तों की निन्दा की है । बौद्ध दर्शन की अपूर्णता यह रही कि ज्योतिष और आयुर्वेद को वेद का अंग मान कर उसकी उपेक्षा की गयी । आयुर्वेद की शल्यचिकित्सा को अहिंसा विरोधी मानकर उसका प्रबल विरोध और प्राय: उन्मूलन किया गया । जैन दर्शन में ज्योतिष का विरोध नहीं है, सूर्य सिद्धान्त के समान उनके भी सूर्य तथा चन्द्र प्रज्ञप्ति, त्रैलोक्य प्रज्ञप्ति आदि ग्रन्थ हैं जो वैदिक ज्योतिष की ही व्याख्या करते हैं. उनकी

विधि अलग है, अत: उसे वेद बाह्य कहा जा सकता है। बहुत सीमा तक वह वैदिक ज्योतिष को समझने में सहायक हो सकता है, जिसका प्रमाण है कि कुमारिल भट्ट ने वैदिक धर्म की स्थापना के लिए महावीर से शिक्षा ग्रहण की थी, उसके बाद शंकराचार्य ने उनका कार्य पूर्ण किया। जैन ज्योतिष तथा वैदिक ज्योतिष की समान्तर धारा निम्नलिखित विचारों के कारण सम्भावित है—

(१) जिस प्रकार भारत की ऐतिहासिक परम्परा में विष्णु के २४ अवतार हुए, उसी प्रकार जैन मत में भी २४ तीर्थंकर हुये। प्राचीन तीर्थंकरों ऋषभदेव, भरत आदि का वेदों में भी वर्णन है। वे भारत के शासक थे, जो कि वेद भूमि है। उनकी परम्परा वेद विरुद्ध कैसे हो सकती है?

(२) वेद पूर्ण तथा अन्तिम सत्य है, किन्तु वह व्यावहारिक पाठ्य पुस्तक नहीं हो सकता है। व्यावहारिक विषयों जैसे कृषि, शिल्प, गणित, जीवविज्ञान रसायन आदि उससे अलग रूप में होंगे तथा कई प्रकार के होंगे। पाठ्य पुस्तकों का रूप तात्कालिक भाषा, स्थानीय समाज, पढ़ाई के स्तर या कक्ष आदि के कारण अलग-अलग प्रकार हैं। अत: शासन या समाज द्वारा जिस शिक्षा को चलाया जायेगा वह लौकिक या जैन शिक्षा होगी। अत: सभी जैन तीर्थंकर क्षत्रिय राजा हुए हैं। ब्राह्मण ग्रन्थों के ब्राह्मण नाम के आधार पर बिना उन्हें देखे पाश्चात्य विद्वानों ने सिद्धान्त निकाला है कि वह ब्राह्मण जाति का पक्षपाती ग्रन्थ था तथा जैन धर्म उसके विरुद्ध क्षत्रियों का विरोध था (बुद्ध भी इसी प्रकार क्षत्रिय थे) वही विद्वान ऐतरेय ब्राह्मण के रचयिता महिदास को दास या शूद्र कहते हैं, ताण्ड्य महाब्राह्मण के नाम पर 'तण्डि' जाति पश्चिम ओड़िशा में शूद्र है, महाब्राह्मण का भी वही अर्थ है।

(३) जैन ज्योतिष में ग्रहों की कक्षा का पृथ्वी के समतल पर विक्षेप के रूप में वर्णन किया गया है। गोले का समतल नक्शा बनाने के लिए दो वृत्त बनाये जाते हैं अत: जैन ज्योतिष में २ सूर्य, २ चन्द्र तथा ५४ नक्षत्र हैं, दोनों गोलों के लिए एक ही चीज़ को दो बार दिखाना पड़ता है। स्कूल एटलस में ऐसा ही है, नौचालन, जमीन की पैमाइश इसी आधार पर है। अलग विधि न जानने के कारण ब्रह्मगुप्त तथा भास्कराचार्य ने इनकी निन्दा की है, उस समय जैन ज्योतिष का शिक्षण प्रचलित नहीं था। विक्षेप में चन्द्र कक्षा सूर्य कक्षा के ऊपर होगी। सूर्य कर्क रेखा (२३°/३०') उत्तरी अक्षांश तक ऊपर जाता है तथा चन्द्रमा उससे ५° उत्तर चन्द्रवंशी राजाओं की राजधानी दिल्ली तक जाता है। जैनमत से ग्रह कक्षा का वर्णन विष्णु पुराण (२/८) में तथा अन्य पुराणों में है। इसी पुराण के लुप्त खण्ड विष्णु धर्मोत्तर पुराण के ज्योतिष अध्याय के आधार पर ब्रह्मगुप्त ने ६२८ ई. में ब्रह्म स्फुट सिद्धान्त की रचना की है।

(४) जैन ज्योतिष में वर्णित मेरु का आकार कई पुराणों में है। दिल्ली का कुतुब मीनार या विष्णुध्वज उसी मेरु का प्रतिरूप है। (लिश्क का जैन ज्योतिष या उपाध्याय द्वारा सिद्धान्त दर्पण व्याख्या भाग-२) मेरु के उसी रूप का वर्णन वेदों में भी है।

(५) गणितीय वर्ष, मास, दिन एक होने पर भी व्यावहारिक सुविधा के लिए अलग-अलग पद्धतियों का व्यवहार किया जाता है। वर्ष ३६५ १/४ दिन का होता है, किन्तु व्यवहार में ३६५ या ३६६ दिन का वर्ष होगा। तिथि का आरम्भ गणित के अनुसार किसी समय हो सकता है किन्तु व्यवहार में स्थानीय सूर्योदय काल से उसका पालन होता है। अत: तीन उद्देश्यों के लिए ३ प्रकार की ज्योतिष धाराओं का सदा से प्रयोग हुआ है—सिद्धान्त

ग्रन्थों का उद्देश्य निरयन ग्रहों का स्थान तथा दीर्घ कालिक पंचांग, वेदांग ज्योतिष का प्रयोग अयन वर्ष (ऋतुवर्ष या ट्रोपिकल वर्ष) के लिए है (ऋक् ज्योतिष के श्लोक, ६,७,८,९,२२ तथा याजुष् ज्योतिष ६,७,८,९,२८, ३०) यह यज्ञों के लिए उपयोगी है जैसे मध्यकाल में कृषि सम्बन्धी यज्ञ के लिए फसली सन् था। जैन ज्योतिष में इन्हीं सिद्धान्तों के आधार पर नक्शा बनाने की विधि है। पृथ्वी का नक्शा, आकाशीय नक्शा, भूगोल पुस्तकों, नौ चालन की सारणी बनाने के लिए इसका प्रयोग होता है। पाश्चात्य विद्वान् मिस्र और सुमेर के लिए यह तथ्य समझते हैं पर भारत के लिए वेदांग ज्योतिष, जैन ज्योतिष तथा सिद्धान्त ज्योतिष-तीन अलग-अलग युगों की कल्पना करते हैं। कार्ल सागान ने ब्रोकाजब्रेन के पृष्ठ १०६ पर लिखा है—

प्राचीन विज्ञान तथा गणित के अग्रणी इतिहासकार आटो न्युगेबायर (१९५७) की मान्यता है कि मेसोपोटामिया तथा मिस्र दोनों स्थानों पर दो बिल्कुल अलग-अलग कैलेण्डर व्यवहार किये जाते थे। सावन वर्ष गणना की सुविधा के लिए एक कैलेण्डर तथा दूसरा आयन या ऋतु वर्ष फसल के लिए जो गणना में कठिन किन्तु ऋतु चक्र या ज्योतिषीय सत्य के निकट था। कई प्राचीन सभ्यताओं ने दो कैलेण्डर की समस्या के समाधान के लिए वर्ष के अन्त में ५ दिन का अवकाश जोड़ दिया था।

**४. शक तथा संवत्सर**—वैदिक साहित्य में 'वत्सर' तथा उसमें ५ उपसर्गो से युक्त अन्य ५ शब्दों का वर्ष के अर्थ में व्यवहार है। इनमें संवत्सर सबसे प्रसिद्ध है। शतपथ ब्राह्मण (११/१/६/१२) में इसकी उत्पत्ति **सर्वत्सर** से कही गयी है। कालरूप प्रजापति **सर्वत्सर** है, शतपथ ब्राह्मण (१/४/१/३४) के अनुसार यह क्रान्तिवृत्त है, जिस पर पृथ्वी का भ्रमण होता है। यह हर स्थान पर वक्र होने के कारण **सर्वत्सर** है। इसी का रूप संवत्सर हो गया है।

ज्योतिष में संवत्सर का दो अर्थों में प्रयोग है। वर्तमान काल में प्रचलित हर वर्ष गणना पद्धति संवत्सर या संक्षेप में संवत् कही जाती है। वत्सर का अर्थ वत्स या सन्तान है, यह प्रजापति या पृथ्वी की वार्षिक गति से उत्पन्न है। चान्द्र वर्ष तथा सौर वर्ष के आरम्भ में अन्तर के आधार पर वर्षों का वर्गीकरण है।

| **सौर वर्ष का नाम** | **आरम्भ की तिथि** | **चन्द्र नक्षत्र** |
|---|---|---|
| १. संवत्सर | माघशुक्ल १ से ६ तक | श्रविष्ठा (०) से अश्विनी (५.४) |
| २. अनुवत्सर | माघ शुक्ल ७-१२ | अश्विनी (५.४)-आर्द्रा (१०.८) |
| ३. परिवत्सर | माघ शुक्ल १३ से माघ कृ० ३ | (१०.८) से उत्तराफाल्गुनी (१६.२) |
| ४. इदवत्सर | माघ कृष्ण ४-९ | (१६.२) से अनुराधा (२१.६) |
| ५. इदावत्सर | माघ कृष्ण १०-१५ | (२१.६) से श्रविष्ठा |

वर्ष का आरम्भ माघ शुक्ल प्रतिपदा से तथा नक्षत्र गणना श्रविष्ठा (धनिष्ठा) से होती थी।

तैत्तिरीय ब्राह्मण (३०-१०-४) में अनुवत्सर को इदुवत्सर भी कहा गया है। याजुष् ज्योतिष में छठे प्रकार का वत्सर भी इस श्लोक में है। आजकल वत्सर को ३६० दिनों का सावन वर्ष कहा जाता है। सरकारी कार्यालयों या संस्थाओं का कार्यक्रम बनाने के लिए सावन वर्ष उपयुक्त है, इससे सभी १२ मास ३० दिनों के

होंगे । ३६५ दिन की वर्षगणना में अन्तिम बचे ५ दिन वर्ष के अन्त की छुट्टी होगी । जैसे-क्रिसमस छुट्टी तथा इस्लामी वर्ष के अन्त में हज होता है । प्रति चौथे वर्ष में ६ दिन अतिरिक्त होंगे जिसे षडाह कहा जाता है । याजुष् ज्योतिष में प्रथम ५ वर्ष ३६६ दिनों के हैं = ३६० दिन का वत्सर + ६ दिन का षडाह । छठा वर्ष सिर्फ वत्सर है, जिसमें षडाह नहीं होता । वर्षों का वर्गीकरण ऋक् ज्योतिष के समान वर्ष आरम्भ की चान्द्र तिथि के अनुसार है । सौरवर्ष से १ दिन अधिक होने के कारण २५ वर्षों के ५ युगों में ६ क्षय वर्ष होते हैं, क्योंकि प्रति युग में सभी ५ प्रकार के वर्ष नहीं आ पाते हैं । ऋक् ज्योतिष में ५ सम्वत्सरों का युग कहा गया है । चूंकि अन्य प्रकार के भी वत्सर हैं, अत: एक युग में ५ ही वर्ष नहीं होंगे । ऋक् ज्योतिष की गणना विधि के अनुसार १९ वर्षों का युग होता है जिसमें ५ सम्वत्सर तथा १४ अन्य ४ प्रकार के वर्ष हैं । इनका विस्तृत वर्णन श्री प्रभाकर होले, नागपुर के वेदांग ज्योतिष की अंग्रेजी व्याख्या (१९८५) में है ।

वर्तमान व्यवस्था में एक ही प्रकार का वर्ष है । इसे संवत्सर इसलिए कहा जाता है कि अधिक मास व्यवस्था के कारण चान्द्र वर्ष प्राय: सौर वर्ष के समान है (सम्वत् सरति = प्राय: समान गति से चलता है)

शक का अर्थ शक्ति रूप में है । निर्बल रूप में प्रथम संख्या का चिह्न कुश है, जिसे गिनती के लिए शलाका भी बनाया जाता है । सभी भाषाओं में एक का प्रतीक तथा अरबी भाषा में प्रथम अक्षर का प्रतीक कुश/शलाका ही है । शलाका पुरुष (विशेषकर जैन साहित्य में) का अर्थ प्रथम पुरुष या पुरुषोत्तम होता है । कुश दो प्रकार से सबल होकर 'शक' या शक्तिमान होता है । जंगल में कुश रूप का बड़े आकार का वृक्ष 'शक' होता है । उत्तर भारत में यह वृक्ष साल है जिसे 'शक' या 'सखुआ' कहा जाता है । दक्षिण भारत में यह टीक या सागवान (शाक्यवान्) कहा जाता है । साल या शक वृक्ष का क्षेत्र नेपाल की तराई के राजकुमार होने के कारण गौतमबुद्ध को शाक्यमुनि कहा गया है, वह शक जाति के नहीं बल्कि सूर्यवंश में राम के वंशज थे । मुजफ्फर अली के पौराणिक भूगोल के अनुसार शक द्वीप भारत के दक्षिण-पूर्व तथा उत्तर पश्चिम में दक्षिण-पूर्व यूरोप तक था जहाँ 'शक' आकार के वृक्ष थे । दक्षिण-पूर्व एशिया भारत के ही ९ खण्डों में था, अत: मध्य एशिया तथा यूरोप ही शक द्वीप था । कुश से दूसरा शक होता है, बहुत से कुशों को एक साथ बांधने से, जैसा एकता की शक्ति दिखाने वाली बोध कथा में वर्णित है । गिनने की प्रक्रिया एक-एक की संहति है और गिनती की सारणी में भी ५-५ का गट्ठर बनाया जाता है—

इस अर्थ में किसी निर्दिष्ट समय से बीते वर्ष समूह की गणना को शक कहते हैं । पूरे विश्व में गणना का यही अर्थ प्रचलित होने के कारण मेक्सिको के इतिहास में लिखा गया है कि माया पंचांग में हजारों वर्ष की वर्ष गणना के लिए कुश की गठरी का प्रयोग होता था जिसमें प्रतिवर्ष एक-एक कुश जोड़ा जाता था । शक का गणितीय अर्थ नहीं समझने के कारण यह अनुवाद की भूल है ।

ज्योतिषीय गणना के लिये सबसे पहले मूल समय से बीते दिनों (अहर्गण) की गणना की जाती है । इसके लिए पहले कुल वर्ष संख्या 'शक' निकाला जाता है । पिछले १९०० वर्षों से भारत में शालिवाहन वर्ष गणना का ही ज्योतिषी लोग व्यवहार करते रहे हैं अत: इसे शक कहा जाता है । विक्रम संवत् पर्वों के निर्धारण

# न्यायवैशेषिकदर्शने अनुसन्धानस्य-समस्याः सम्भावनाश्च

■ डॉ० पीयूषकान्तदीक्षितः

तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत् प्रसादात् प्रलीयन्ते मोहान्धतमसच्छटाः ।।

न्यायवैशेषिकदर्शनयोः सिद्धान्ताः प्रायः परस्परम् अविरुद्धाः विद्यन्ते । अत एव न्यायदर्शनं वैशेषिकसमानतन्त्रं स्वीक्रियते । न्यायशास्त्रगवेषकाणां पुरः याः समस्याः प्रादुर्भवन्ति प्रायः ताः एव समस्याः वैशेषिकशास्त्रानुसन्धातृणां पुरस्तात् अपि समायान्ति । अनुसन्धानक्षेत्रे सम्भावना अपि अनयोः शास्त्रयोः समाना ।

न्यायदर्शनं भारतीयदर्शनानां महत्त्वपूर्णा शाखा । न केवलं दर्शनशास्त्रं सम्यगाकलयितुं न्यायदर्शनस्य आवश्यकता, प्रत्युत संस्कृतवाङ्मयस्य अन्यशाखानाम् अवगतिरपि एतद्दर्शन-सापेक्षेति निर्विवादम् । सर्वाण्येव शास्त्राणि पदार्थानां प्रकाशनावसरे असकृत् न्यायशास्त्रीयां परिष्कृतां विचारसरणिमेव अनुसरन्ति ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ।।

इति प्रतिपादयन् आचार्यः कौटिल्यः अपि अस्य न्यायशास्त्रस्य सर्वशास्त्रोपकारकत्वं निरातङ्कम् अभ्युपगच्छति ।

अक्षपादापरनामा भगवान् गौतमः मोक्षोपयोगितया, न्यायदर्शनस्य "प्रमाणप्रमेये"त्यादीनि न्यायसूत्राणि निरमात्, महर्षिः कणादश्च "अथातो धर्मं व्याख्यास्यामः" इत्यादीनि वैशेषिकसूत्राणि व्यरचयत् ।

एतदुभयमपि शास्त्रं गच्छति काले नास्तिककुतर्कनिराकरणपटुभिर्व्याख्यातृभिः भाष्यवार्तिकटीकाभिः सम्यक् प्रपञ्चितं गहनतरं समजनि । न्यायशास्त्रीय-सिद्धान्तस्य तदाश्रितविचार-परिपाट्याश्च निवर्तनमपि शनैः शनैर्न्यानिये लब्धास्पदमदृश्यत । षोडशपदार्थानां विचारापेक्षया प्रत्यक्षानुमानोपमानशाब्देति प्रमाणचतुष्टयस्य विचार एवोत्तरकालीन-न्यायशास्त्रपरिशीलयितृणां समधिकावधानभाजनं समपद्यत । वैशेषिकशास्त्रं द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायेति पदार्थषट्कस्य, अनन्तरञ्चाभ्युपेतस्य अभावनाम्नः सप्तमस्य पदार्थस्य सूक्ष्मातिसूक्ष्मं विमर्शमादधत् भारतीयदार्शनिकानां विचारशैलीं सुतरां पर्यकार्षीत् । अनयोः न्यायवैशेषिकशास्त्रयोः अन्योन्योपकारकतया सम्मेलनेन अभिनवशैलीसमन्वितस्य नव्यन्यायशास्त्रस्य आविर्भावः अभूत् । इदं नव्यन्यायशास्त्रं भाषा दृष्ट्या सरणिदृष्ट्या च अत्यन्तं प्रौढं परिष्कृतञ्च आस्ते । नव्य-न्याय-भाषया विहितः विचारः सूक्ष्मतायाः परां काष्ठां प्राप्नोति । नव्य-न्यायस्य प्रथमः ग्रन्थः तत्त्वचिन्तामणिः मिथिलावास्तव्येन श्रीमता गङ्गेशोपाध्यायेन त्रयोदशशताब्दौ निरमायि ।

एतावता विवेचनेन भारतीयतर्कशास्त्रस्य न्याय-वैशेषिक-नव्यन्यायभेदेन तिस्रः शाखाः सन्तीति प्रतिपादनमेव मम समीहितम्। न्यायवैशेषिकदर्शनयोः अनुसन्धानं नव्य-न्यायशास्त्रावधारणं विना असम्भवि इत्यपि मे प्रतिपिपादयिषितमिति अवश्यमेवावगन्तव्यम्।

सम्प्रति न्यायवैशेषिकदर्शनयोः आवश्यकं सङ्क्षिप्तं परिचयं प्रदाय, अनयोः शास्त्रयोः अनुसन्धानावसरे काः समस्याः सम्मुखमायान्तीति विचार्यते।

न्यायवैशेषिकशास्त्रयोः अनुसन्धानकाले समुपस्थिताः समस्याः द्विधा विभागमर्हन्ति। प्रथमा तावत् समस्या सामान्या द्वितीया च विशिष्टा। सामान्यसमस्यायाः अनुभवस्तु सर्वेषां भारतीयशास्त्रगवेषकाणां हृदि प्रादुर्भवत्येव।

संस्कृतभाषया अनुसन्धानकर्मणि व्यापृतानां अस्माकं शोधच्छात्राणां जाज्वल्यमाना प्रमुखा समस्या भाषामधिकृत्य वरीवर्ति। शोधच्छात्राः संस्कृतविश्वविद्यालयेषु संस्कृतगिरा शोधप्रबन्धरचनार्थं पञ्जीकृतास्तु नूनं दृश्यन्ते परं संस्कृतभाषायाम् एतेषाम् अधिकारस्तावत् सन्तोषकरः नानुभूयते।

अत्र एकान्ततः अनुसन्धातॄणामेव दोषः इति न वक्तुं पार्यते। समग्रं तन्त्रमेव अस्यामव्यवस्थायां दोषभाग् इति सुनिश्चितं तथ्यम्। यः शोधार्थी छात्रः आचार्यान्तम् अधीत्यापि पञ्जीकरणार्थं निर्धारितायां समितौ साक्षात्कारं संस्कृतगिरा प्रदातुं सामर्थ्यं नावहति, तस्य पञ्जीकरणं यदि अधिकारिभिः नानुष्ठीयत तर्हि इयं शोधक्षेत्रे विद्यमाना समस्या सुसमाहिता स्यादेव।

तत्र शोधच्छात्राः अधिकारिणश्च समस्यायाः अस्याः समाधानं शोधप्रबन्धभाषायां संस्कृतमधिकृत्य यः दृढानुरागः तत् परित्यागमपि मन्वते। परं नेदं सुविचारितं समाधानम्। देवभाषोपनिबद्धानां शास्त्राणां तत्त्वालोडनं संस्कृतज्ञेन अनुसन्धात्रा संस्कृतभाषया यथा अनायासं कर्त्तुं शक्यते न तथा सायासमपि केनचन असंस्कृतज्ञेन तत्त्वमालोचयितुं पार्यते। किञ्च बह्व्यः नूतनाः समस्याः अपि उन्नतशिराः अपरिहार्याः नूनम् उत्पत्स्यन्ति। फलतः संस्कृतगवेषकैः यावत् पर्यन्तं संस्कृतभाषा सम्यक् नाधिक्रियते तावत् पर्यन्तं समस्येयं असमाहितैव स्थास्यतीति निश्चप्रचम्।

ये अनुसन्धातारः खलु संस्कृतभाषायां सर्वथा कृताधिकाराः ते प्रायः विषयावबोधं प्रति उदासीनाः अनुसन्धानकर्मणि महत्काठिन्यमनुभवन्ति। इदं विषयावबोधमधिकृत्य औदसीन्यं तु, अभीष्टस्य ग्रन्थस्य अप्राप्तिमूलकम्, ग्रन्थाशयावबोधयितुः विदुषः अभाववशात्, स्वाभिलषितस्य अनुसन्धानविषयस्य अस्वीकृतिमधिकृत्य, अनुसन्धातुः विषयगताज्ञानवशात्, निर्देशकस्य गुरोः अप्रसन्नताकारणाद्वा सम्भवति। औदासीन्ये एवं बहूनि कारणान्तराण्यपि सम्भाव्यन्ते।

अनुसन्धानाय उपयुक्तस्य ग्रन्थजातस्य आविष्करणमपि गवेषकाणां प्रमुखं कार्यम्। एतत् कार्यं निर्वर्तयितुं विभिन्नेषु विश्वविद्यालयेषु, पुस्तकालयेषु, प्रकाशनसंस्थासु यथा साधनं सम्पर्कः साधनीयः भवति। विदुषां सम्पर्कः अपि कार्येऽस्मिन् सहयोगी भवति। यदि भवान् कमपि विषयमधिकृत्य प्रबन्धकलेवरं प्रस्तोतुं समुद्यतोऽस्ति परं विषयसम्बद्धं कमपि सूत्रं भवान् नाधिगच्छति तर्हि अस्यां स्थितौ शब्दकल्पद्रुमादयः कोषग्रन्थाः विषयं विषयसूत्रञ्चावबोधयितुं पर्याप्तं सहायकाः सिद्ध्यन्ति। 'इन्साइक्लोपीडिया आफ इण्डियन फिलासॉफी'

नामकः ग्रन्थः एवं 'बिब्लोग्राफी आफ इन्डियन फिलॉसाफी' नामकः ग्रन्थः केनचन वैदेशिकेन विलिखितः विषयावबोधनक्षेत्रे महदुपयोगित्वमादधाति । एवं विधाः सन्दर्भग्रन्थाः संस्कृतभाषायां लेखयितुमपि प्रायासः सर्वकारस्य प्रचलति । आयत्यां सत्वरमेव एवं विधाः ग्रन्थाः सुलभाः भवन्ति चेत् ये अनुसन्धातारः आँग्लभाषां नावगच्छन्ति तेषां समस्याः अपि समाहिताः भविष्यन्त्येव ।

विदेशेषु विद्यमानाः अनुसन्धातारः येषां मनागपि संस्कृतभाषया संस्पर्शः नास्ति तेऽपि नव्य-न्यायसदृशं दुरूहं कठिनं च शास्त्रमधिकृत्य अनुसन्धानेच्छया संस्कृतभाषायां प्रकामम् अधिकारमधिगन्तुमेव प्रयत्नशीलाः नावलोक्यन्ते, प्रत्युत अस्माकं देशे समागत्य, न्यायवैशेषिकशास्त्रविशेषज्ञैः विद्वद्भिः सम्पर्कं प्रसाध्य, शास्त्रस्यास्य पारिभाषिकशब्दानां रहस्यमपि विज्ञातुं हृदयेनातुराः दृश्यन्ते ।

अस्माकं देशे विद्यमानाः अनुसन्धातारस्तु स्वल्पायासेनैव एतत् सर्वं विज्ञातुं प्रभवन्ति, परमस्माकं चेतः तदा नितरां चेखिद्यते यदा इमे शोधच्छात्राः वैदेशिकानां पुरः स्वशास्त्राणां, गुरूणां संस्कृतभाषायाश्च निन्दां कुर्वन्तः श्रान्तिं क्लान्तिं वा नानुभवन्ति ।

गुरूपदेशं प्रति साम्प्रतं अश्रद्दधानाः शोधच्छात्राः अस्माकं शास्त्रेषु वर्णितं उपदेशमाहात्म्यमपि विस्मरन्ति । गुरूपदेशं प्रति श्रद्धाविरहितः छात्रः कदापि कथमपि किञ्चिदपि ज्ञानं नाधिगन्तुं प्रभवति, उक्तमपि अस्माकं आचार्यैः 'श्रद्धावान् लभते ज्ञानम्' इति । शोधच्छात्रेषु गुरून् गुरुपदेशञ्चाधिकृत्य श्रद्धाविरहोऽपि अनुसन्धानक्षेत्रे एका महती समस्या ।

गुरुपदेशमहत्त्वं ख्यापयन् कादम्बरीकारः एवं प्रपञ्चयति—

"गुरुपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं गुरूकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः" इति । एवं विधानां गुरूपदेशमहत्त्वख्यापनपराणां शास्त्रवचनानां अनुसरणमेव उपर्युक्तायाः समस्यायाः समाधानमिति मे दृढ़ा मतिः ।

कराले कलिकालेऽस्मिन् शास्त्रमधिकृत्य संस्कृतभाषामधिकृत्य गुरूपदेशं वाधिकृत्य यः अनादरभावः शस्त्रानुशीलयितृष्वपि अन्वहं परिवर्धते तत्कारणनिरूपणमपि कादम्बर्या एव उपवर्णितमास्ते—

"अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशर-शरप्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम् ।"

एतावता अस्माकं शोधच्छात्राणां सर्वथा दोषः अस्तीति नैव वक्तुं शक्यते, समये उचितोपदेशाभावादेव अनुसन्धानप्रतिबन्धकोऽयं अनादरभावः स्थानमवापेति स्फीतं परिलक्ष्यते ।

ये तावत् दुष्प्रकृतयः ते विशुद्धवंशसमुद्भूताः भवन्तु, सुशिक्षिताः वा सन्तु तेषां स्वभावस्तु दुरतिक्रमः एव भवति । एवं विधानां दुष्प्रकृतीनां दुर्विनीतत्वं किल शान्तिप्रदेनापि उपदेशेन वर्धते एव । शीतस्वभावादपि चन्दनात् समुत्पन्नः अनलः दाहमेव जनयति । एवम् अनलोपशमकारकादपि जलात् बडवानलः प्रचण्डतमः एव जायत इति को न जानाति ।

संस्कृतजगति ग्रन्थाशयावबोधनसामर्थ्यमादधानानां विदुषां अभाव: प्राय: अनुभूयते । स्थितावस्यां सर्वेषां शास्त्राणामध्ययनम् अनुसन्धानञ्च कथं सुसम्पद्येतेति, नितरां शोचनीयोऽयं विषय: । न्यायवैशेषिकदर्शनयो:, विशेषत: नव्य-न्याय विषये ये छात्रा: खलु अनुसन्धित्सव: तेषां समक्षमियं महती समस्या । द्वित्रा: ये विद्वांस: न्यायवैशेषिकदर्शनस्य उपलभ्यन्ते तेऽपि दुर्लभप्राया: अनुसन्धातॄणाम् ।

अस्या: समस्याया: विज्ञानम् अधिकारिणामपि विद्यते । एतत् समाधानार्थमेव संस्थासु पुरश्चर्याकार्यक्रम: अपि प्रचाल्यते । एवं बहव: अन्ये अपि कार्यक्रमा: विविधाभि: शिक्षणसंस्थाभि: काले-काले आयोज्यन्ते, तत्र शोधार्थिभि: भाग: अवश्यमेव ग्राह्य: । राजधान्यां 'भारतीय दार्शनिकअनुसन्धान परिषद्' नाम्नी एका संस्था विद्यते इयं प्राय: ग्रीष्मर्तौ गवेषकाणां सौविध्यमभिलक्ष्य दर्शने, विशेषत: न्याय-वैशेषिकदर्शने प्रशिक्षणकार्यक्रमं प्रचालयति । अस्या: संस्थाया: सदस्या: प्रख्याता: दार्शनिका: सन्ति । गवेषकै: एवं विधाभि: संस्थाभि: सम्पर्क: संस्थाप्यते चेत् तत्त्वज्ञानां दार्शनिकानां उपयोग: गभीरानुसन्धानदिशि सुशक: स्यादेव ।

'अक्के चेन्मधु बिन्देत किमर्थं पर्वतं व्रजेत्' अस्या: उक्ते: इदं तात्पर्यम्—यदि गृहकोणे एव मधु प्राप्यते चेत् कश्चन पर्वतं कथं गच्छेदिति । भवतां शिक्षण संस्थायामेव बहव: तत्तच्छास्त्रविशेषज्ञा: विराजन्ते परं तान् प्रति अश्रद्धाभावं उपेक्षाभावं वा प्रकाश्य यदि भवान् सायासं दूरं याति चेत् कस्यायं दोष:, इति स्वयमेव चिन्तयितुं शक्यते । अहमेतत् निवेदयितुकामोऽस्मि, यदि भवतां गेहे एव सर्वं सुलभं तर्हि भवदीयम् अनुसन्धानं सर्वथा समस्याविरहितं विद्यते इति सुनिश्चितम् । यद्यपि गृहस्थितानां सदस्यानां विदुषां वा उपेक्षा आलोचना वा झटिति लोके अनुष्ठीयते इति वास्तविकं तथ्यम्, परं गृहसदस्यालोचनभावनया शोधच्छात्रा: यदि निवृत्ता: भवन्ति तर्हि तेषां अनुसन्धानसमस्या: बहुधा अवसिता: भविष्यन्ति ।

प्राय: अनुसन्धातार: शोधकार्यं सम्यक् सम्पादयितुं विविधामि: संस्थाभि: योग्यतानुरूपां छात्रवृत्तिं लभन्ते । आनुषङ्गिकव्ययनिमित्तक: धनराशि: अपि संस्थाभि: प्रदीयते । अयं धनराशि: पुस्तकं क्रेतुं पुस्तकालयेषु अनुसन्धानप्रयुक्तं सम्बन्धञ्च साधयितुं निर्धारितो भवति, परं छात्रास्तावत् प्राय: अस्य राशे: सदुपयोगं कर्त्तुं नैव प्रवर्त्तन्ते । यदि शोधकर्त्तार: राशेरस्य दुरुपयोगाद् विमुखा: भवन्ति चेत् नैका: समस्या: स्वयं सुसमाहिता: स्यु: ।

अधुना न्यायवैशेषिकदर्शनयो: अनुसन्धानस्य या: सम्भावना: सन्ति ता: निरूप्यन्ते-'आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:' इति बृहदारण्यकोपनिषद: वाक्यमेव भारतीयदर्शनानां सारतत्त्वं भूमिका वा वक्तुं शक्यते अस्मिन् वाक्ये आत्मसाक्षात्कारस्य हेतूनां उल्लेख: विद्यते । एतेषां श्रवण-मनन-निदिध्यासनात्मकानां आत्मसाक्षात्कारसाधनानां दर्शनेषु प्रामुख्येन प्रतिपादनं दृश्यते । श्रुतिवाक्येऽस्मिन् विद्यमानं द्रष्टव्य इति पदमेव 'दर्शनम्' इति नामकरणस्यापि मूलं कारणम् इति ध्येयम् । प्रियतमां मैत्रेयीमुद्दिश्य याज्ञवल्क्यस्यायमुपदेश एव विविधव्याख्यानरूपेण भारतीयदर्शनस्य असङ्ख्यासु धारासु प्रवहति ।

आत्मन: मननार्थमेव न्यायवैशेषिकदर्शनस्य महदुपयोगित्वं स्वीक्रियते । आत्मन: मननं तावत् न्यायवैशेषिकदर्शनानुसारं आत्मन: इतरभिन्नत्वेनानुमानमेव अनुमानप्रकारश्च आत्मा, स्वेतरभिन्न: आत्मत्वात्, यत् इतरेभ्यो न भिद्यते न तत् आत्मत्ववत् यथा घटादि:, न चायं तथा इति । इदञ्च इतरभेदानुमानं भेदप्रतियोगीतरज्ञानसाध्यं भवति । एवञ्च इतरदेव, कियदिति जिज्ञासां शमयितुं न्यायवैशेषिकदर्शनयो: पदार्थनिरूपणम् आरभ्यते ।

न्यायदर्शनस्य प्रख्यात: विद्वान् उदयनाचार्य: अपि न्यायकुसुमाञ्जलिकारिकायां परमात्मन: मननमेव प्रारम्भे—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥

इत्यनया कारिकया प्रतिजानते। फलत: स्थालीपुलाकन्यायेन मननम् अनुमानं वा न्यायदर्शनस्य प्रमुखं प्रतिपाद्यमिति सिद्ध्यति। मननञ्चाधिकृत्य न्यायवैशेषिकदर्शने अनुसन्धानस्य महती सम्भावना इत्यत्र नास्ति विदुषां संशीतिलेशोऽपि। अनुमानं न्याय-दर्शने स्वार्थ-परार्थभेदेन द्विविधम्, प्रत्येकमप्यनुमानमाधारीकृत्य विद्यते पर्याप्तम् अनुसन्धानस्यावसर:।

न्यायवैशेषिकदर्शनयो: बहव: जटिला: दुरूहाश्च पारिभाषिका: शब्दा: सन्ति येषाम् अर्थं प्रकाशमानेतुं सूक्ष्मातिसूक्ष्मस्य अनुसन्धानस्य विद्यते महती आवश्यकता। केचन पारिभाषिका: शब्दा: अत्रोल्लिख्यन्ते—

(१) प्रतियोगिता (२) अवच्छेदकता (३) अनुयोगिता (४) सम्बन्धस्य प्रतियोगिता अनुयोगिता च (५) विशेषणता (६) आधेयता (७) आधारता (८) विषयता-विषयिता (९) निरूप्यता-निरूपकता (१०) कार्यता (११) कारणता (१२) प्रतिबध्यता (१३) प्रतिबन्धकता

एवं विधा: बहव: पारिभाषिका: शब्दा: न्यायवैशेषिकदर्शनयो: प्राप्यन्ते। अत्र प्रति पारिभाषिकशब्दम् अनुसन्धानस्य प्रबला सम्भावना उपयोगिता च विद्यते।

एवं दर्शनेऽस्मिन् प्रतिपदार्थमधिकृत्य प्रतिपदम् गवेषणाया: आवश्यकता दृढम् अनुभूयते। परं न्याय-वैशेषिकदर्शनयो: विशेषत: नव्य-न्याये प्रबुद्धानां गवेषकाणां प्राय: अभाव एव अनुभूयते। इयं न्यायवैशेषिक-दर्शनयो: अन्येभ्य: शास्त्रेभ्य: अनुसन्धानक्षेत्रे विलक्षणा समस्या विद्यते। अस्या: समाधानं खलु शोधच्छात्रैरेव कर्त्तुं शक्यते।

मम दृष्ट्या शास्त्राणि अनुसन्धातुं प्रवृत्त: कोऽपि जन: किमप्यभिनवं विधातुं नैव पारयति। केवलं प्रतिपादनशैली एव अनुसन्धाने ग्रन्थनिर्माणे वा अभिनवा सम्भाव्यते। अत एव न्यायवैशेषिक 'दर्शनयो: प्रकाण्ड: विद्वान् न्याय-मञ्जरीकार: जयन्तभट्ट: अपि ग्रन्थारम्भे नूतन पदार्थकल्पनायां स्वीयम् असामर्थ्यम् एवं प्रकाशयति—

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमा:।
वचो विन्यासवैचित्र्यमात्रमत्रावधार्यताम्॥ इति

न्यायवैशेषिकदर्शनयो: प्रारम्भिक: ग्रन्थ: अन्नम्भट्टविरिचित: तर्क-सङ्ग्रह: प्रसिद्ध एव। तर्कामृतमपि जगदीशतर्कालङ्कारेण अनयो: दर्शनयो: बालानां व्युत्पत्तये एव विरचितम्। अनयो: ग्रन्थयोरपि विषयगतं साम्यं सर्वापरोक्षम्, परं प्रतिपादनशैली तु द्वयोरपि ग्रन्थयो: सर्वथा भिन्नैव आस्ते।

नव्य-न्यायप्रवर्तक: गङ्गेशोपाध्याय: व्याप्तिमधिकृत्य अनुमानचिन्तामणौ यत् प्रतिपादयति तदेव गङ्गेशो-पाध्यायस्य तनूजन्मा महान् पण्डित: वर्धमानोपाध्याय: न्यायकुसुमाञ्जले: स्वरचितायां प्रकाशव्याख्यायां अक्षरश: उल्लिखति। फलत: कस्यापि विषयस्य अनुसन्धानं नाम अभिनवया सरण्या आत्मसात् कृतस्य तत्त्वस्य सरलया भाषया प्रतिपादनमेवेति आकूतम्।

# विशेषविमर्शः

डॉ० हरेरामत्रिपाठी

द्रव्यगुण[१]कर्मसामान्यविशेषसमवायानां षड्भावपदार्थानां साधर्म्यवैधर्म्याभ्यां सम्यग् ज्ञानात् मोक्षस्य प्राप्तिः भवति । तच्च ईश्वरचोदनात् धर्मादेव वा । तत्र जिज्ञासा भवति कः धर्मः ? उच्यते यस्मात्[२] लौकिकपारलौकिकोन्नतिः वा अभ्युदयः, अथ च मोक्षस्य प्राप्तिः भवति स धर्म इति । तत्र गुणाश्रयत्वे सति क्रियाश्रयत्वं द्रव्यस्य लक्षणम् । यद्वा समवायिकारणत्वं द्रव्यस्य लक्षणम् । यद्वा गुणात्यन्ताभावानधिकरणत्वं, मूर्तत्वरहितसमवेतसमवेतत्वरहितमूर्तत्वरहितामूर्तत्वरहितसमवेतजातिमत्वं वा द्रव्यस्य लक्षणम् । अथवा गन्धसमवेतगमनारविन्दसमवेतजातिमत्वं द्रव्यस्य लक्षणम् ।

संयोगाजन्यसंयोगसमवायिसमवेतत्वरहितसंयोगासंयोगसमवेतवान्, वा विभागाजन्यविभागासमवायिसमवेतत्वरहितविभागाविभागसमवेतो गुणः ।

संयोगासमवेतसंयोगासमवायिसमवेतवत्वं यद्वा संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मणः लक्षणम् ।

समवेतरहितसर्वान्योन्याभावसमानाधिकरणं समवेतत्वं यद्वा सामान्यानधिकरणत्वे सति विशेषभिन्नत्वे सति समवेतत्वं सामान्यस्य लक्षणम् ।

अतः परं जिज्ञासा भवति द्रव्यगुणकर्मसामान्यानन्तरं कः भावपदार्थः विद्यते ? यस्य साधर्म्यवैधर्म्ययोः सम्यग् ज्ञानं दुःखात्यन्तिकरूपं वा एकविंशतिदुखध्वंसस्वरूपं मोक्षं प्रति कारणं भवति । उच्यते वैशेषिकसूत्रकारेण "अन्यत्रा'न्त्येभ्यो विशेषेभ्यः ॥[३]" इति । अत्र प्रशस्तपादाचार्येणोच्यते "नित्यद्रव्यवृत्तयोऽन्या विशेषाः ।[४] ते खल्वत्यन्तव्यावृत्तिहेतुत्वात् विशेषा एव ।"

उक्तार्थः नित्यद्रव्येष्वेव वर्तन्त एव ये ते विशेषा इति । नित्यद्रव्येष्वेव इति कथनेन द्रव्यगुणकर्मसामान्येषु नातिव्याप्तिः । तथाहि-द्रव्याणि द्रव्येषु, गुणाः द्रव्येषु, कर्माणि च द्रव्येषु वर्तन्ते । एवं सामान्यं द्रव्यातिरिक्तेषु गुणेषु

१. धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः (वैशेषिकसूत्रम्) ॥ अ १ आ १

२. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ वैशेषिकसूत्रम् ॥ अ. १. आ. १.

३. वैशेषिकसूत्रम् ॥ अ १ आ २ सूत्र ६

४. प्रशस्तपादभाष्यम् ॥ पृष्ठम् ३६ (वाराणसेय संस्कृतविश्वविद्यालयः वाराणसी)

कर्मेष्वपि च विद्यते। मात्रनित्यद्रव्येषु द्रव्यगुणकर्मसामान्यानि न वर्तन्ते। मात्रनित्यद्रव्येषु समवायसम्बन्धेन विशेषाः सन्ति। विशेषास्तु सर्वदा स्वाश्रयस्येतरस्माद् व्यवच्छेदस्यैव कारणत्वात्।

द्रव्यकिरणावल्यां उच्यते "के ते[1] अन्त्याः। अन्ते अवसाने भवन्ति सन्ति इति यावत्। येभ्योऽपरे न सन्ति। सामान्यरूपेभ्यः विशेषेभ्यः अपरे गुणादयः विशेषाः सन्ति। एभ्यस्तु नापरे विशेषाः। नित्येषु तु द्रव्येषु आश्रयरहितेषु समानजातीयेषु समानगुणकर्मसु च भवितव्यम् व्यावर्तकधर्मेण व्यावृत्तत्वात्।"

आनन्त्यं = बहुत्वं तथा च विशेषमात्रसंज्ञकाः बहुत्वयोगिनो न तु सामान्यवदेक इति भाष्यार्थः।

अयं परमाणुः परमाण्वन्तरसमवेतत्वशून्यधर्मसमवायीनित्यद्रव्यत्वे सति तत्परमाणुभिन्नत्वात् आत्मादिवत् इत्यनुमानेन विशेषपदार्थः सिद्ध्यति।

मथुरानाथेन विशेषपदार्थस्य लक्षणमित्थमुच्यते—

"द्रव्यसमवेतत्वे[2] सत्तावद्भिन्नत्वे च सति अन्त्यत्वं विशेषत्वमिति" भाष्य स्वरससिद्धलक्षणम्। अपि च "सत्तावद्भिन्नत्वे द्रव्यद्वयासमवेतत्वे च सति द्रव्यसमवेतत्वमिति विशेषस्य लक्षणम्।"

केचित्तु विशेषाः, विशेषयन्ति = व्यावर्तयन्ति स्वाश्रयमाश्रयान्तरादिति। तथाहि समानजातिगुणक्रियाधाराः परमाणवः, विशेषसम्बन्धिनः व्यावृत्तबुद्धिविषयत्वात्, यो यो व्यावृत्तज्ञानविषयः स स विशेषसम्बद्धो यथा स्थाण्वादिः। तथा च व्यावृत्तज्ञानविषयाः परमाणवः तस्मात् विशेषयोगिन इति।

अन्योन्याभावविरोधिसामान्यरहितः समवेतः पदार्थः विशेष इति सर्वदर्शनकारः।[3] जातिरहितत्वे सति नित्यद्रव्यमात्रवृत्तिः, तथाचोक्तं अजातिरेकवृत्तिश्च विशेष इति शिष्यते। एकद्रव्यं स्वभावसन् इति न्यायलीलावतीकारः।[4]

"अन्त्यो नित्यद्रव्य[5] वृत्तिर्विशेषः परिकीर्तितः।" इति कारिकावली। अत्र अन्त्यत्वं स्वतो व्यावृत्तत्वं, तच्च स्वप्रयोज्य स्वनिष्ठस्वसजातीयप्रतियोगिकभेदकत्वम्, स्वसाजात्यञ्च पदार्थविभाजकोपाधिरूपेण ज्ञेयम्। स्वं विशेषः, तेन प्रयोज्यो यो विशेषनिष्ठो विशेषान्तरप्रतियोगिको भेदो यस्य विशेषस्य तत्कत्वम्। अनुमानन्तु विशेषः विशेषान्तरभिन्नः स्वस्मात्।

केचित्तु स्वलिङ्गकस्वविशेष्यकस्वसजातीयभेदानुमितिविषयत्वरूपं स्वतो व्यावृत्तत्वं वदन्ति इति। तन्न। घटो घटान्तराद्भिन्नः तादात्म्येन घटादित्यनुमितिविषयत्वस्य घटेऽपि सत्त्वेनाऽव्याप्त्यापत्तेः।

अन्ये तु सामान्यरहितत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं विशेषस्य लक्षणमिति वदन्ति। अत्र द्रव्यगुणकर्मवारणाय सामान्यरहितत्वे सतीति। सामान्यवारणाय सामान्यभिन्नत्वे सतीति। समवायाभाववारणाय

१. द्रव्यकिरणावलीरहस्यम् पृ. संख्या ८५
२. द्रव्यकिरणावलीरहस्यम् पृ. सं. ८७
३. सर्वदर्शनसंग्रहः (औलूक्यदर्शनम् पृ. २१६)
४. न्यायलीलावती
५. न्यायसिद्धान्तमुक्तावली पृ. ५०

समवेतत्वमिति। अत्र सामान्यरहितत्वं अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपं ज्ञेयम्। सामान्यभिन्नत्वञ्च अधिकरणतात्रयनिरूपितसमवायसम्बन्धवच्छिन्नाधेयत्वावच्छिन्न स्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्वरूपं ज्ञेयम्। समवेतत्वञ्चाधिकरणता निरूपितसमवायसम्बन्धावच्छिन्नाधेयतावत्वरूपमिति। अधिकरणत्रयं द्रव्यगुणकर्मनिष्ठमधिकरणतात्रयम्। अधिकरणता च केवलद्रव्यनिष्ठाधिकरणता। तथा च अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वे सति अधिकरणात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्त्वे च सति अधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयतावत्त्वं विशेषत्वमिति। स्वतो व्यावृत्तत्वमपि विशेषस्य लक्षणम्।

"नित्य[१] द्रव्यवृत्तयो विशेषास्त्वनन्ता एव" इति अन्नं भट्टः।

अत्र नित्येषु द्रव्येषु पृथिवीजलतेजः पवनानां परमाणुषु आकाशकालदिगात्ममनःसु च वर्तमाना इति। नित्यत्वं ध्वंसाऽप्रतियोगिमात्रं प्रागभावाप्रतियोगित्वमात्रं वा ज्ञेयम्। अनन्ताः = असंख्या इति। विशेषाणां सिद्धिप्रकारः घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदप्रयोज्योऽवयवविभेदः यथा अयं घटः तद्घटभिन्नः, एतदीयकपालभेदात्। अत्र हेतुः स्वप्रतियोगिसमवेतत्वसम्बन्धेन बोध्यः। एवमेतत् कपालं तत्कपालभिन्नं तत्कपालिकाभेदात्। एतत्कपालिका तत्कपालिकाभिन्ना पिण्डभेदात्। अयं पिण्डः तत्पिण्डभिन्नः चतुरणुकभेदात्। अयं चतुरणुकः तच्चतुरणुकभिन्नः त्र्यणुकभेदात्। अयं त्र्यणुकः तत्र्यणुकभिन्नः द्व्यणुकभेदात्। इदं द्व्यणुकं तद्द्व्यणुकभिन्नं परमाणुभेदात् इति। ततो द्व्यणुकोत्पादान्यथाऽनुपपत्त्या परमाणुसिद्धौ सत्यां परमाणूनां भेदः किञ्चित् प्रयोज्यः भेदत्वात् कपालभेदप्रयोज्यघटभेदवत् इत्यनुमानेन किञ्चित्पदेन विशेषभेद एव सिद्ध्यति। अन्ये नित्यद्रव्याणां सदृशानां जलपरमाणूनां मुक्तात्मनाञ्च परस्परं भेदबुद्धिजनकाः विशेषाः। ते पुनः स्वत एव स्वस्वरूपभेदबुद्धिजनकाः। अत्र शिरोमणयः यथा स्वस्वरूपभेदजनकाविशेषास्तथा परमाणवोऽपि स्व स्वरूपभेदबुद्धिजनका इति किमर्थमतिरिक्तपदार्थान्तरकल्पनयेत्याहुः इति चेन्न। परमाण्वादयः व्यावृत्तज्ञानविषयाः द्रव्यत्वात् गवादिवत्। संशयविषयत्वञ्च परमाण्वादेः सत्तासम्बन्धित्वात् स्थाण्वादिवत्। यत्र च संशयस्तत्रावश्यं निर्णय इति। परमाण्वादयः विशेषसम्बन्धिनः, निर्णयविषयत्वात् स्थाण्वादिवदेव, अत इदमाह अन्यनिमित्तासम्भवाद् येभ्यो निमित्तेभ्यो प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिस्ते अन्त्या विशेषाः इति। नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ताः। अत्र वेङ्कटसूरिणः लक्षणं कुर्वन्ति। स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयभेदानुमित्यविषयत्वम्। अस्ति च विशेषेषु विशेषो विशेषाद्भिन्नस्तद्विशेषेणैव स्वसजातीयप्रतियोगिकभेदसाधनात्। स्वभिन्नलिङ्गजन्य स्वविशेष्यक स्वसजातीयप्रतियोगिताकभेदानुमिति विषयो यो घटादिस्तद्भिन्नत्वमिति लक्षणसमन्वयः। अत्र निषेधद्वयाभावे घटः पटादिभ्यो भिद्यते घटादिति स्वात्मकलिङ्गजन्यघटादिविशेष्यक यत्तत् सजातीयतादृशानुमितिविषयत्वाद् घटेऽतिव्याप्तिः स्याद्। तस्मिन् घटत्वादिहेतुक तादृशानुमितिविषयत्वस्यापि सत्त्वान्न क्षतिः। अन्यतरगर्भतायां स्वात्मकतादृशानुमित्यविषयत्वस्य भिन्नलिङ्गजन्यतादृशानुमितिविषयत्वस्य विशेषेऽभावादसम्भवः। स्यादत उभयगर्भता स्वविशेष्यक स्वसजातीयानुमितौ स्वभिन्नात्मादि- जन्यत्वेन स्वभि-

१. तर्कसंग्रहदीपिका पृष्ठ सं. १८

न्नजन्यतादृशानुमितिविषयत्वसत्त्वेन तदविषयत्वाभावादसम्भवः, स्यादतो लिङ्गेति। लिङ्गज्ञानार्थकं तेनानुमितिसामान्यस्य लिङ्गजन्यत्वे तादृशानुमित्यप्रसिद्ध्या न लक्षणस्य पूर्वोक्तासम्भवापत्तिः। आचार्यमताभिप्रायेण यथाश्रुतमेव वा बोध्यम्। विशेषवत्परमाणुः विशेषभिन्नपरमाणुत्वादित्यादौ स्वभिन्नलिङ्गजन्यस्वसजातीयभेदानुमितिविषयत्वाद्विशेषस्यासम्भवः, स्यादतः स्वविशेष्यकेति स्वविषयकमात्रोक्तावपि तथेत्यतो विशेष्येति न चैतद् विशेषघटादौ इतरभिन्नौ एतद्विशेषघटान्यतरत्वादित्यत्र स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयभेदानुमितिविषयत्वादसम्भव इति वाच्यम्। स्वविशेष्यकेत्यनेन स्वमात्रविशेष्यकेत्यर्थकत्वात् प्रकृते चानुमितेः स्वभिन्नघटादिविशेष्यकत्वादसम्भवाभावात् विशेषो द्रव्यभिन्नो निर्गुणत्वादित्यत्र स्वभिन्नलिङ्गजन्यस्वविशेष्यकभेदानुमितिविषयत्वादसम्भववारणाय स्वसजातीयेति। साजात्यञ्च पदार्थविभाजकोपाधिरूपेण एवञ्च स्वसजातीयेत्यस्य पदार्थविभाजकरूपसाजात्यविशेषमात्रवृत्तिः तद्धर्मवद्भिन्नप्रतियोगिताकेत्यर्थः। तेन द्रव्यादेः प्रमेयत्वादिना तद्विषयघटान्यतरस्य विशेषवृत्तिपदार्थविभाजकोपाधिमत्त्वे सजातीयत्वाद्गुणशून्यत्वतद्विशेषत्वाभ्यां तत्प्रतियोगिकभेदानुमितिविषयत्वेऽपि विशेषस्य न क्षतिः।

न चैवमेतद्विशेषस्तद्विशेषौ तद्विशेषोभयभिन्न एतद् विशेषादित्यनुमानं स्यात् पक्षप्रकारीभूतस्य भेदस्य निरुक्तस्य स्वसजातीयमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वादिति वाच्यम्। द्रव्याद्विशेषो विशेषाभाववान् विशेषत्वादित्यत्र स्वभिन्नलिङ्गजन्यतादृशानुमितिविषयत्वादसम्भवः इत्यतो भेदेति। अत्यन्ताभावेत्युक्तावप्यत्र दोष एवेति तथैव निवेशः। स्वभिन्नवाक्यरूपलिङ्गजन्यतादृशस्वसजातीयप्रतियोगिताकभेदविषयकशाब्दबोधविषयत्वादसम्भवः स्यादतो अनुमितीति।

वस्तुतस्तु लिङ्गज्ञानस्य वा कारणत्वलिङ्गत्वेन लिङ्गज्ञानत्वेन वा वक्तव्यम्। अन्यथा तद्विशेष्यकहेतुकविशेषान्तरभेदानुमितौ मनःसंयोगाभावादिज्ञानयोः जनकत्वात्। तयोः कुत्रचिल्लिङ्गज्ञानरूपत्वेन विशेषेऽसम्भवापत्तेः। एवं चोक्तशाब्दबोधे स्वभिन्नलिङ्गज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताभावात्, तद् विषयत्वेऽपि विशेषस्य न क्षतिः, इत्यनुमितिपदं व्यर्थम्। अथवा एतादृशहेतुत्वबोधनाय तदिति बोध्यम्। अनुमितिरपि प्रमात्मिकाग्राह्या तेन विशेषस्य स्वभिन्नलिङ्गजन्य स्वविशेष्यकस्वप्रतियोगिकभेदविशेष्यक स्वप्रतियोगिकभेदभ्रमानुमितिविषयकत्वेऽपि न क्षतिः।

ननु समवायस्यापि एतल्लक्षणाक्रान्तत्वात्, तत्रातिव्याप्तिरिति चेन्न सजातीयभेदकत्वे सतीत्यपि विशेषणीयत्वात्।

नन्वेवं यत्राङ्कुरादिविशेषे स्वभिन्ने विशेषे स्वभिन्नलिङ्गेन स्वसजातीयभेदानुमितिर्जाता तत्रातिव्याप्तिरिति वाच्यम्। अविषयत्वमत्र विषयतासम्बन्धेन तादृशानुमितियोग्यताविरहस्य विवक्षितत्वात्। प्रकृते चाङ्कुरादेस्तादृशभेदानुमितियोग्यतायाः सत्त्वेन प्रतियोगितावच्छेदकसम्बन्धान्तरनिवेशेन च क्षतिरित्यविस्तरेण।

# सर्वसाधनसमन्वये श्रीगीता

डॉ० स्वप्नादेवी

श्रीमद्भगवद्गीतायाः अष्टादशाध्यायसमन्वितायाः अन्तरङ्गसमीक्षया लभ्यते हि वैदिककर्ममार्गः वैदान्तिकज्ञानमार्गः सांख्यतत्त्वं समाधियोगः भक्तिमार्गश्च स्वस्वपरिधिमाश्रित्य प्रवर्तन्ते स्म । एतेषां सनातनधर्मस्य अङ्गत्वेनापि बाह्यतः परस्परविरोधसाधनत्वेन प्रवृत्तिरुपलब्धा । मार्गभेदाच्च मतवैभिन्यं समाजे समागतम् । गीतायामेव सर्वेषाम् अधिकारभेदे सार्थक्यं प्रदर्शितम् । परस्परविरोधश्च समाप्तिं नीतः ।

वेदे काण्डद्वयं वर्तते कर्मज्ञानभेदेन । वेदवादः कर्मकाण्डम् । वेदान्तवादः ज्ञानकाण्डम् । तान्र्यधिया उभयकाण्डं वेदवाद इति भवति । 'अथातो धर्मजिज्ञासा'[१] इत्यनेन आरभते कर्मकाण्डम् । 'अथातो ब्रह्मजिज्ञासा[२]' इत्यनेन आरभते ज्ञानकाण्डम् । कर्मकाण्डं प्रवृत्तिमार्गः । ज्ञानकाण्डं निवृत्तिमार्गः । एतयोर्मध्ये को मार्गः श्रेयान् । महाभारतस्य शान्तिपर्वणि पितरं प्रति शुकदेवस्य उक्तिः—

**यदिदं वेदवचनं कुरु कर्म त्यजेति च ।**
**कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ।।**[३]

महाभारतस्य बहुत्र तस्य समाधानद्वयं प्रदत्तम् । तथा च तत्रोक्तम्—

**कर्मणा वध्यते जन्तुर्विद्यया प्रमुच्यते ।**
**तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ।।**[४]

संन्यासमार्गमाचरताम् एतदेव वचनम् । कर्मणा बन्धनं भवति, एतत् खलु सर्वसम्मतम् ।

वस्तुतः कर्मत्यागस्य आवश्यकता नास्ति । बन्धनस्य कारणं कर्तृत्वाभिमानम्-फलासक्तिः । न तु कर्म । निष्कामकर्मणि कृते सति वन्धनं न भवति । 'कर्म कुरु त्यजेति च' इत्यस्य वेदवचनस्य तात्पर्यं महाभारतस्य वनपर्वणि स्पष्टीकृतम्—

---

१. पातञ्जलदर्शनम्, १/१/१

२. ब्रह्मसूत्रम्, १/१/१

३. महाभारतम्, शान्तिपर्व, २४०/१

४. तत्रैव, २४०/७

तदिदं वेदवचनं कुरु कर्म त्यजेति च।
तस्मादधर्मानिमान् सर्वानभिमानात् समाचरेत् ॥[१]

आश्वमेधिकपर्वणि चोक्तम्—

तस्मात् कर्मसु निःस्नेहा ये केचित् पारदर्शिनः ।[२]

पारदर्शिनः कर्म न कुर्वन्ति इति तु न। ते तु आसक्तिं फलाभिलाषं त्यजन्ति । गीतायामपि उक्तम्—"तस्मादसक्तः सततं कार्यं कर्म समाचर ।"[३] ऋते अध्यात्मज्ञानम् आसक्तिवर्जनं न सम्भवति । अतो गीतासु कर्म उपदिष्टम्; आत्मज्ञानञ्चोपदिष्टम् ।

असंन्यस्य कर्म लब्धेऽपि ज्ञाने आसक्तिवर्जं लोकसंग्रहार्थाय कर्मकरणमेव कर्तव्यमिति गीतानुशासनम् । एष खलु ज्ञानकर्मसमुच्चयवादः एतन्मतम् इशोपनिषद्यपि उपलभ्यते ।[४] ज्ञानान्मुक्तिरितिपक्षे कर्मत्यागस्योपदेशो वर्तते । एतत् सांख्यमतम्—एष वैदान्तिकमार्गः । निष्कामकर्मकरणे वन्धनं न भवति । अतः मोक्षार्थं कर्मवर्जनस्य आवश्यकता नास्त्येव । एष एव वेदान्तिककर्मयोगः, योगमार्गो वा । ज्ञानमूलकसंन्यासमार्गः सांख्यशब्दवाच्यः । ज्ञानमूलककर्ममार्गो योगशब्दवाच्यः । वेदान्तिककर्मयोग एव गीतायाः प्रतिपाद्यं वस्तु । अध्यायान्ते उक्तञ्च—"इति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे....." इति । वस्तुतः उपनिषद्सार एव गीता । उपनिषदेव श्रीमद् भगवद् गीता ।

गीतासु अनेकत्र योगशब्दस्य प्रयोग उपलभ्यते । सर्वत्र ज्ञानमूलकसंन्यासमार्गत्वेन प्रयुक्तः । मीमांसादिषु कर्मशब्देन यागयज्ञादिकमवगम्यते । गीतासु तु व्यापकार्थे तस्य प्रयोगो विहितः । श्रौतस्मार्तकर्मणः इष्टपूर्त्तस्य ग्रहणं भवति गीताप्रोक्तकर्मशब्देनेति केषाञ्चिन्मतम् । सर्वाणि काम्यकर्माणि निष्कामत्वेन करणीयानीति तेषामाशयः । अपितु निष्कामकर्मणः स्वरूपमनेकत्र अपाकर्तुं न शक्यते यथा पुत्रेष्टियागः । अतः यागप्रवृत्तये पुत्रलाभ एव कारणम् । यस्य पुत्राकाङ्क्षा नास्ति तस्य एतस्मिन् यागे प्रवृत्तिरपि न भवति । वस्तुतः संकीर्णे अर्थे कर्मशब्दस्य प्रयोगो गीतासु नोपलभ्यते । त्वं युध्यस्व । जनकादिभिरपि कर्म कृतम्, लोकसंग्रहार्थं मयापि युद्धं क्रियते । अनाचरन् कर्म लोकः क्षणमपि नावतिष्ठते । विना कर्म शरीरव्यापारः न संघटते । अत्र सर्वत्र इष्टापूर्तस्य कोऽपि प्रसङ्गो नास्ति । कर्म तु नियतं कर्म इत्युक्तम् ।

निष्कामकर्म सम्भवति किम् ? फलासक्ति नास्ति, सिद्धिश्च असिद्धिश्च तुल्या इति धिया कर्मप्रवृत्तिर्न सम्भवतीति प्रतीच्यविदुषां केषांञ्चिच्च अस्माकं मतम् । न चेत् फलाकाङ्क्षा कर्म कथम् ? विना लक्ष्यं कर्म न। विना उद्देश्यं कर्मप्रवृत्तिः मूर्खस्यापि न भवति । अपितु फले औदासीन्यं न हि उद्देश्यहीनता । निष्कामकर्म न उद्देश्यविहीनम् । लोकसंग्रहस्तथा जगतपरिपालनं हि उद्देश्यम् । निष्कामकर्मनिचयः जगद्धितायैव प्रवर्तते । निष्कामकर्म हि भगवदर्चनम् । भगवतस्तथा कर्मकर्त्तुरिच्छायामेकीभूतायां प्रकृतः निष्कामकर्म भवति । तदा कर्त्तुर्व्यष्टि-

१. महाभारतम्, वनपर्वणि, २/७४

२. महाभारतम्, आश्वमेधिकपर्वणि, ५२/३२

३. श्रीमद्भगवद्गीता, ३/१९

४. कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ —ईशो-२ विद्यां चाविद्यां च यस्तदोभयं सह-तत्रैव-२२

बुद्धिः दूरं याति । तदा फलाफले साम्यधीः स्वाभाविकी भवति । विनोदनार्थं क्रीडायां प्रवर्त्तितायां जये पराजये वा क्रीडार्थिनां यया औदासीन्यं लक्ष्यते तथा निष्कामकर्मणि । अत्र आक्षेपो हि निष्कामकर्मणि सति सम्भवेऽपि नैतिकं मानं कुतः । अत्र यन्त्रचालितपुत्तलिकावत् कर्मानुष्ठानम् । अहं यन्त्रः नियन्ता यन्त्री ।

नैतिकमानापेक्षया गीताप्रोक्तम् आध्यात्मिकतत्त्वं श्रेयः नैतिकमानं कर्मफलप्राप्तिरूपं यत्तत् त्याग एव निष्कामकर्मिणः लक्ष्यम् । कर्मफलचिन्तनमेव कर्मबन्धः स्वर्गो वा नरको वा पुनर्जन्मो वा । प्रकृतवेदविदुषो नैषा आकाङ्क्षा उदेति । यतोऽस्माकं समुद्भवः यतश्च कर्मप्रवृत्तिः तत्स्वरूपा जिज्ञासा एव अस्माकं वर्तते । यन्त्रस्व-रूपमात्मानं मन्यमानः यन्त्रिणि आत्मसमर्पणमेव सुधियां वृत्तिः । अहं प्रतिष्ठारजोगुणिनाम्, सात्त्विकानां आक्षौ अन्तिमे एकमेव साधनम्—अहं वर्जनम् । अतः प्रतिदिनं प्रातः शय्यातः उत्थाय भारतनिवासिनः पठन्ति-त्वया हृषीकेश हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।

कर्ममयं मनुष्यजीवनम् । सर्वकर्मनिष्कामत्वेन लोकसंग्रहार्थम् ईश्वरार्पणबुद्धौ क्रियते चेत् तस्य भवति यज्ञसंज्ञा । जीवनयज्ञं कामनाशून्यं विधाय ईश्वरमुखितासम्पादनमेव गीतोपदेशः । एतेनैव जीवानां मोक्षः जगतोऽभ्युदयश्च साधितो भवति । अतः श्रीमता भगवता गीतायां काम्ययागयज्ञादीनां निन्दायां कृतायामपि निष्कामयागयज्ञादीनां प्रशंसनं कृतम् । यतः एतादृशं कर्म चित्तशुद्धिकरं लोकरक्षानुकूलञ्च । एवं वैदिककर्ममार्गेन सह वैदान्तिकज्ञानमार्गस्य समन्वयः साधितः । अपितु सांख्यतत्त्वदर्शिनां तथा वैदान्तिकब्रह्मवादिनां च विप्रतिप-त्तिरस्ति । सांख्यनये पुरुषः साक्षीचेता केवलो निर्गुणश्च । मायावादिनां नये च तथा सांख्यमते संसारप्रपञ्चस्य मूलं प्रकृतिः, वेदान्तमते माया । सांख्यमते प्रकृतिवियुक्तो पुरुषः यदा स्वरूपस्थो भवति तदा प्रकृतिकर्म स्तब्धं भवति । वेदान्तमते मायायाम् अवसानगतायां जीवो ब्रह्म भवति । ब्रह्मवेद ब्रह्मैव भवति । अतो दृश्यते उभयत्र परं ज्ञानं मोक्षो वा कर्मनिवृत्तिकारणम् । विश्वसृष्टिप्रक्रिया च विलुप्ता भवति ज्ञानादेव । अतः ज्ञानवादिनां नये आलोका-न्धकारवत् ज्ञानकर्मणोर्युगपत्स्थितिः न सम्भवति ।

गीतायां पुरुषोत्तमत्वेन आक्षेपोऽयं मीमांसितः । अध्यात्मतत्त्वविचारे गीतायां पुरुषत्रयं प्रकृतिद्वयञ्च उपदिष्टम् । तथाह्युक्तम्—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।**
**उत्तमपुरुषस्त्वन्यः परमात्मा उदाहृतः ।।**[१]

प्रकृतिश्च परापि अपरा च—

अपरा हि—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।।**
**अपरेयमितस्त्वन्यां प्रकृतिं बिद्धि मे पराम् ।**[२]

---

१. श्रीमद्भगवद्गीता— २५/२६
२. तत्रैव— ७/४-५

एतेन निरीश्वरसांख्यवादस्य, निर्विशेषब्रह्मतत्त्वस्य सगुणस्य ईश्वरवादस्य भगवत्तत्त्वस्य वा समन्वयः कृतः ।

एतत् समन्वयमूलकदार्शनिकतत्त्वमाधारीकृत्य ज्ञान-कर्म-भक्तिमिश्रः अपूर्वः योगधर्मः उपदिष्टः ।

ब्रह्मणः निर्गुणर्गुणत्वधर्मः भगवति एव वर्तते । निर्गुणत्वे निष्क्रियत्वादिकं सगुणत्वे सृष्टिकर्तृत्वं तस्मिन् परमे ब्रह्मणि एव वर्तते ।

नानात्वबुद्धौ अपगतायां एकत्वज्ञाने सञ्जाते जीवस्य भवति ब्रह्मसारूप्यम् । तदा तस्य कर्म भगवत्-कर्मत्वेनैव पर्यवस्यति ।[१] तदा निमित्तमात्रः सन् जीवः भगवति पराभक्त्या भगवतो सगुणनिर्गुणस्वरूपमधिगच्छति । तदा च स ईश्वरगतचित्तः ईश्वरार्पितकर्मा, ईश्वरभक्तः कर्मयोगी च सन् कर्म क्रियमाणः ईश्वरे एव स्थितिं विन्दते । अतः कर्मज्ञानयोर्विरोधः कुतः । एतेन ब्रह्मवादिनां मतमपास्तं भवति ।

सांख्यानाम् अक्षेपस्य समाधानमेवं भवति । सांख्यस्य प्रकृतिपुरुषौ परतत्त्वस्य अपरा प्रकृतिः परा च । मूलतत्त्वं तु पुरुषोत्तमः । प्रकृते क्रियमाणानि कर्माणि[२] ईश्वराधिष्ठानवशतः एव ।[३] पुरुषोत्तमः एव प्रकृतिः अधीश्वरः ।[४] प्रकृतिमुक्तः जीवः त्रिगुणातीतो भवति । तदापि तस्य कर्म स्तब्धं न भवति यावच्छरीरं विश्वलीला प्रचलति । अपितु ज्ञाने उदिते कर्मकर्तृत्वं विलुप्यते । तथा च गीतावाक्यम्—"यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।"[५]

एवं पुरुषोत्तमतत्त्वमाश्रित्य परमतानि अंशतः गृहीत्वापि परं सामञ्जस्यं कृतं भगवता श्रीगीतायाम् ।

पातञ्जलदर्शनप्रोक्तसमाधियोगस्य अवतारणं किमर्थ कृतं गीतायाम् तदधुना आलोच्यते ।

चित्तः वाह्यवस्तुतः प्रत्याहृत्य नित्यवस्तुान स्थापनं हि योगप्रयोजनम् । गीतायाः षष्ठेऽध्याये पातञ्जलप्रोक्तराजयोगस्य उपदेशोऽस्ति । पातञ्जलयोगतः किञ्चित् पार्थक्यं तु अस्त्येव । असम्प्रज्ञातसमाधिवलात् कैवल्यलाभो हि पातञ्जलयोगोपदेशः । एतेन दुःखस्य आत्यन्तिकी निवृत्तिर्भवति चित्तस्य अखिले संस्कारे लुप्ते सति वृत्तौ च नष्टायां शरीरं दुग्धसूत्रवत् भासते । एतस्मिन् सुखानुभूतिर्न भवति । समाधिवलेन ब्रह्मज्ञानिनां ब्रह्मसाक्षा-

---

१. मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।—गीता, ११/५५

२. प्रकृते क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढ़ात्मा कर्त्ताहमिति मन्यते ॥ तत्रैव, ३/२७

३. प्रकृत्यैव च कर्माणि क्रियमाणानिः सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥—तत्रैव, १३/३०

४. मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥—तत्रैव, १४/३
सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥"—तत्रैव, १४/४

५. तत्रैव— १५/११

त्कारे सति तस्य ब्राह्मीस्थिविर्भवति । दुःखस्य आत्यन्तिकी निवृत्तिर्भवति । भूमौसुखानुभूतिश्च भवति । तथा चोक्तं गीतायाम्—

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ।।**[१]

अन्यत्र च गीतादर्शनं स्पष्टतः लक्ष्यते—

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।।**[२]

सांख्याः निरीश्वरवादिनः । पातञ्जले ईश्वरस्य विकल्पविधानमस्ति ।[३] वेदान्तनये निर्गुणे ब्रह्मणि स्थितिः गीतायां तु निर्गुणगुणिनि पुरुषोत्तमे चित्तसंयोगः । अतो गीतायामुपदिष्टम् ।—

**भोक्तारं यज्ञतपसा सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमिच्छति ।।**[४]

गीतायोगो भगवद्भक्तिर्हि । गीतोपदिष्टं योगानन्दम् ईश्वरप्राप्तिजनितम् ।[५] भगवद्भक्तः योगिनां युक्ततमः ।[६] गीतोक्तयोगी आत्मानं साक्षात्कृत्य सर्वत्र सर्वभूतेषु आत्मानं पश्यति ।[७] सर्वभूतेषु ईश्वदर्शनेन निष्कामकर्मणा सर्वभूतोपकाराय प्रवर्तते भगवति चित्तार्पणमेव गीतायाः गुह्यतम उपदेशः ।

अतः परिशेषे कथयितुं शक्यते हि—मीमांसायाः वेदोक्तं कर्म गीतायाम् अङ्गीकृतम् । वेदस्य स्वतः प्रामाण्यं बौद्धवत् न अनङ्गीकृतम् । अपव्याख्यानं वेदवादस्य अपसार्य मीमांसाप्रोक्तयज्ञादीनामर्थं संप्रसार्य ज्ञानयुक्तं भक्तिसमन्वितं च विधाय निष्कामकर्म भगवता अत्रोपदिष्टम् । वेदान्तस्य ब्रह्मवादः स्वीकृतः । कर्मसंन्यासस्तु न गृहीतः, सृष्टिक्रिया न धिक्कृता । विश्वस्रष्टुः कर्म विश्वकर्मत्वेन रूपं लब्धम् । आश्रित्य च पातञ्जलयोगम् सर्वं कर्म ईश्वरमुखतां गतम् । एवं गीतायां कर्म-ज्ञान-योग-भक्तिसमन्वयात् अपूर्वः चतुरङ्गो योगधर्मः समुपदिष्टः ।

---

१. तत्रैव,६/२१
२. तत्रैव,१४/२७
३. ईश्वरप्रणिधानाद्वा —पातञ्जलयोगदर्शनम्, समाधिपादः/२३
४. श्रीमद्भगवद्गीता,५/२९
५. युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ।—तत्रैव,६/१५
६. योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।—तत्रैव,६/४७
७. सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शिनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ —तत्रैव,६/२९-३०

# विज्ञान और गीता में संसृति और निवृत्ति की अवधारणा

■ डॉ० रमेश प्रसाद पाठक

जीवन तथा मृत्यु के रहस्यों को अनावृत करके मानव-जिज्ञासा का समुचित समाधान करने का प्रयास अध्यात्म तथा विज्ञान दोनों ही करते रहे हैं, कर रहे हैं और ये प्रयास सतत् रहेंगे भी ।

विज्ञान की दृष्टि में जीवन तथा मृत्यु को समझना कितना दुरूह है यह इस बात से स्पष्ट हो जाता है कि न तो वैज्ञानिक 'जीवन' को परिभाषित कर पाये हैं और न 'मृत्यु' को । विज्ञान ने जीवितों एवं मृतों के लक्षण अवश्य ही संख्याबद्ध किए हैं परन्तु उनमें से सभी-प्रत्येक जीवधारी में नहीं मिलते हैं । एकमात्र लक्षण जो प्रत्येक जीवधारी में मिलता है वह है प्रजनन । परन्तु इसकी अनुपस्थिति उसके मृत होने का प्रमाण नहीं है । प्रजनन-अपने जैसे अन्य जीवधारी को जन्म लेने की शक्ति सत्यार्थों में जीवन के सतत् चलने की आकांक्षा है, जिसे वैज्ञानिक दृष्टि में **"जीन्स का संरक्षण"** मान सकते हैं ।

पहले वैज्ञानिकों का विचार था कि **'कोशा'** ही जीवन का सूक्ष्मतम रूप एवं इकाई है और प्रोटोप्लाज्म ही जीवन । इलेक्ट्रान सूक्ष्मदर्शी के आविष्कार एवं विकास ने इस पूर्व धारणा को मिथ्या घोषित कर दिया क्योंकि कोशा से भी सूक्ष्म जीवधारी हैं यथा रिकेट्रसिया तथा वाइरस आदि । वाइरस यथार्थ में डी-आक्सीकार बोज-न्यूकिलइक एसिड (डी० एन० ए०) का एक अणु है । यदि इसे प्रजनन करते हुए न देखा जाए तो इसे मृत ही माना जा सकता है क्योंकि मृत्यु के बाद भी डी०एन०ए० तो रहता ही है जिसके कारण ये डी०एन०ए० जीवित थे अर्थात् प्रजनन योग्य थे—वह क्या है ? इसके बारे में कुछ भी ठोस ज्ञात नहीं है । वाइरस की रचना एवं जीवन प्रक्रिया के कारण ही इसे जीवित एवं मृत के मध्य की कड़ी समझा जाता है ।

मृत्यु की व्याख्या भी बहुत कठिन है । मानव एक अति विकसित जीव-धारी है परन्तु मृत्यु की व्याख्या इसमें भी अत्यन्त कठिन है । बहुत से वैज्ञानिकों का विचार है कि मृत्यु भी एक प्रकार की **"रुग्णता"** है जिसका उपचार अभी हमारे पास नहीं है । सम्भव है कि आने वाली शताब्दियों में हमारे लिए यह असम्भव न रहे । इसी विचार से अमेरिका में कुछ व्यक्तियों के शव सुरक्षित रखे जा रहे हैं—(द्रव नाइट्रोजन से प्रशीतित एवं रक्त बदल कर) इसका परिणाम भविष्य के गर्भ में हैं ।

कुछ प्रयोगों से ज्ञात हुआ है कि मृत्यु के समय कुछ समान प्रकार की आकृति वाली वस्तु शरीरधारी से विलग हो जाती है जिसे वैज्ञानिकों ने **'न्यूट्रीनों कण'** कहा । इन न्यूट्रीन कणों के गुण धर्म के बारे में अभी कुछ भी ज्ञात नहीं है । वैज्ञानिक अनुसंधान कर रहे हैं ।

मानव मृत्यु को चिकित्सा शास्त्र ने विभाजित कर दिया है । अवरुद्ध हृदय गति, बन्द श्वसन एवं विस्फुरित पुतलियाँ मानव की **"लाक्षणिक-मृत्यु"** बताती हैं । परन्तु अभी भी इसकी **''जैविक-मृत्यु"** नहीं हुई । पर "जैविक मृत्यु" कब होगी इसका भी कुछ प्रायोगिक अनुभव नहीं है । यदि **"लाक्षणिक मृत्यु"** को प्राप्त मानव चिकित्सक के अथक प्रयास से बच जाता है तो व्यक्ति की जैविक मृत्यु नहीं हुई थी अन्यथा जैविक मृत्यु हो गयी ।

मृत्यु भी अचानक एक ही दिन में नहीं हो जाती है । शरीर में सहस्त्रों कोशिकायें प्रतिदिन मृत्यु को प्राप्त होती हैं और अनेकों नित्य जन्मती हैं । एवं जब जन्मने वाली कोशिकाओं की संख्या घटती जाती है तब क्रमश: शरीर मृत्यु की ओर अग्रसरित होता है । यही क्रमश: मृत्यु की अवधि "आयु" अथवा "जीवन-काल" के नाम से पहचानी जाती है ।

मातृ एवं पितृ जीन्स क्रमश: अण्डकोश एवं शुक्राणु के द्वारा शिशु को प्राप्त होते हैं जिसे गर्भ में माँ का संरक्षण एवं बाद में पिता का संरक्षण प्राप्त होता है माता एवं पिता के गुणसूत्रों पर जीन्स के रूप में विस्थापित एवं सम्मिलित होकर पुन: एक नया जीवन बनाते हैं । माता एवं पिता में उनके वंशजों के जीन्स संरक्षित रहते हैं एवं उन गुणों जो कि माता एवं पिता में थे, का संसार में अभाव नहीं होता बल्कि सम्मिलित रूप से रूपान्तर हो सकता है । इस प्रकार जीवन के आदि में, मध्य में अन्त में, मृत्यु है तथा इसका विपरीत कथन भी सत्य है ।

डी०एन०ए० से अलग होकर डी०एन०ए० की मृत्यु का कारण होने वाली शक्ति ही प्राचीन साहित्य में **''आत्मा"** एवं न्यूट्रीनों कणों को **"सूक्ष्म शरीर"** के रूप में जाना जाता है । हिन्दू-धर्म की जीवन सम्बन्धी विचार धारा मुख्यत: तीन परिकल्पनाओं पर आधारित है । इस विचारधारा की प्रथम आधार शिला है "ईश्वर की उपस्थिति को स्वीकार करना ।" यह परिकल्पना प्रत्यक्ष उत्तर न दे पाने के कारण उपहास का पात्र बनी । प्रत्यक्ष वही है जो इन्द्रियगम्य है । प्रत्यक्ष न होने से भी ईश्वर की अनुपस्थिति सिद्ध नहीं होती है । यथा पराश्रव्य कम्पन, परा बैंगनी किरणें, इन्फ्रारेड किरणें, इन्द्रियगम्य न होने पर भी हैं । इनके प्रभावों को देखकर ही इनकी उपस्थिति का ज्ञान होता है । इन्द्रिय सीमा से परे ज्ञान नहीं है, ऐसा मानना मैं समझता हूँ भ्रम है । अपनी एकादश इन्द्रियों पाँच कर्मेन्द्रियों, पाँच ज्ञानेन्द्रियों एवं मन के द्वारा भी हम करोड़ों प्रकाश वर्षो तक विस्तृत ब्रह्माण्ड का ज्ञान संपूर्णता से नहीं पा सकते हैं । यदि प्रकाश की गति से चलना सम्भव हो भी जाये तो भी इसे घूमने में ही करोड़ों वर्ष लगेंगे । वस्तुत: हमें तो पृथ्वी के बारे में भी पूर्ण ज्ञान नहीं है । फिर जिसे शास्त्र ने महानतम से भी महान् कहा है उसे विचार-परिधि में बाँधने की सोचना ही व्यर्थ है ।

इस परिकल्पना की दूसरी कड़ी है "आत्मा" । ईश्वर के **एकोऽहं बहुश्याम:** संकल्प के कारण जीवधारियों की उत्पत्ति हुई। परन्तु ईश्वर अनन्त है। **"ॐ पूर्णमद: पूर्णमिदं पूर्णाद् पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"** अनन्त में से अनन्त निकाल दें, अनन्त जोड़ दें, अनन्त का भाग दें या अनन्त से गुणा करें तो भी वह अनन्त ही रहता है । ईश्वर तो अनन्त है । यह शुद्ध आत्मा क्रमश: पञ्चावरणों से आवृत होकर स्थूल शरीर ग्रहण करता है । इन्हीं आवरणों के प्रभाव से ही जीवधारी को सुख-दु:ख, पाप-पुण्य, सद्गति एवं दुर्गति का अनुभव होता है । अन्यथा ज्ञान की दृष्टि से देखें—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥[१]

हे धनञ्जय ! मेरे सिवाय किंचित्मात्र भी दूसरी वस्तु नहीं है यह सम्पूर्ण जगत् सूत्र में सूत्र की मणियों के सदृश मेरे में गुंथा हुआ है।

ईश्वर के अतिरिक्त कुछ भी न होने की दृष्टि सारे कर्मों को भस्मसात् ही कर देगी। परन्तु ऐसी दृष्टि ही तो कठिनता से प्राप्त होती है। कर्मों का पश्चात्ताप सूक्ष्म शरीर के साथ रहता है, अदृश्य बन्धन की तरह। इसी से प्रेरित तीसरी कड़ी है पुनर्जन्म।

पुनर्जन्म ही जीवन तथा मृत्यु की कुछ व्याख्या देता है। परन्तु पुनर्जन्म की नियमबद्ध व्याख्या असंभव है, क्योंकि न तो यह प्रायोगिक है न ही अनुभूत। यह एक तार्किक व्याख्या प्रस्तुत करता है जो कि स्मृति का, पूर्व स्मृति का, गुण, जाति आदि का स्पष्टीकरण प्रदान करता है।

प्राचीन भारतीय साहित्य में अनेक पुनर्जन्म की घटनाओं का वर्णन है। उदाहरणार्थ महाराज भरत का मृग रूप में पुनर्जन्म, मरते समय मृग का ध्यान करने से हुआ इसी विचारधारा के कारण मरते हुए व्यक्ति की विचारधारा को पवित्र धार्मिक विचारों से प्रभावित करने की कोशिश की जाती है। महाराज नृग का गिरगिट रूप में जन्म गाय के दोबारा दान देने के फलस्वरूप प्राप्त विप्र-श्राप के कारण हुआ। हंस के बच्चों ने पूर्व जन्म में धृतराष्ट्र के द्वारा मारे जाने पर उनके यहां पुत्र रूप में जन्म लेकर पुत्र शोक प्रदान करने हेतु पुनर्जन्म पाया। रति के प्रेम को सफलीभूत करने हेतु कामदेव ने कृष्ण तनय प्रद्युम्न के रूप में जन्म लेकर शबर का वध करके शबर कन्या रूप रति से विवाह किया। पति के इष्ट श्रीराम पर अविश्वास करके कालोपरान्त मृत्यु को प्राप्त सती ने पार्वती रूप में जन्म लेकर महान तप करके पुनः शिव को प्राप्त किया। नारद के श्राप को शिरोधार्य करके भगवान् ने तो बार-बार जन्म लिया। आज भी पुनर्जन्म की घटनायें प्रकाश में आती रहती हैं। इनके विश्लेषण से आत्मा के अस्तित्व की अप्रत्यक्ष पुष्टि होती है। परन्तु यह कहना कि पुनर्जन्म क्यों? कैसे? कहाँ? कब? शायद असम्भव है।

भगवान् श्री कृष्ण ने तो श्रीमद्‌भगवद्गीता में इसकी व्याख्या की है एवं मुक्तिमार्ग भी दिया है—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥[२]

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥[३]

---

१. श्रीमद्‌भगवद्गीता ७/७
२. श्रीमद्‌भगवद्गीता १३/२२
३. श्रीमद्‌भगवद्गीता १३/२३

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥[१]**

प्रकृति में स्थित हुआ पुरुष प्रकृति से उत्पन्न त्रिगुणात्मक सब पदार्थों को भोगता है और इन गुणों के कारण ही जीवात्मा को अच्छी बुरी योनियों में जन्म लेने का कारण है (जैसे सत्वगुण के संग से देव योनि, रजो गुण के संग से मनुष्य योनि एवं तमो गुण के संग से पशु पक्षी आदि नीच योनियों में जन्म होता है)।

वस्तुतः ये पुरुष (आत्मा) देह में स्थित होने पर भी मायातीत हैं। केवल साक्षी होने से उपद्रष्टा सम्मतिदायक होने से अनुमत्ता सबको धारण करने वाला होने से भर्ता, जीव रूप में भोक्ता एवं ब्रह्मादि का स्वामी होने से महेश्वर एवं शुद्ध सच्चिदानन्दघन होने से परमात्मा ऐसा कहा गया है ॥ इस प्रकार पुरुष एवं प्रकृति को गुणों के सहित जो तत्त्व से जानता है अर्थात् दृश्यमात्र सम्पूर्ण जगत् माया का कार्य होने से क्षणभंगुर नाशवान, जड़ एक अनित्य है तथा शुद्ध बोध रूप सच्चिदानन्दन परमात्मा का ही सनातन अंश जीवात्मा है इस प्रकार समझ कर सम्पूर्ण मायिक पदार्थों के संग का सर्वथा त्याग कर परमात्मा में ही एकीभाव से स्थित रहता है। वह सब प्रकार से बरतता हुआ पुनर्जन्म नहीं लेता है।

अतः भगवान् वेद निहित सत्कर्मों को करने का आदेश देते हैं क्योंकि वही साधन प्रत्यक्षतः इनके अन्तर में मोक्षदायक परिलक्षित होता है।

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**
**सर्वारम्भा ही दोषेण धूमेनाग्निरिवावृताः ॥[२]**

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।**
**नैष्कर्यासिद्धिं परमां संन्यासेनाधिगच्छति ॥[३]**

हे कुन्तीपुत्र दोष युक्त होने पर भी स्वाभाविक कर्म त्यागना नहीं चाहिए क्योंकि धुएं से अग्नि के सदृश सब कर्म किसी न किसी दोष से आवृत हैं। तथा सर्वत्र आसक्ति रहित बुद्धि वाला स्पृहा रहिता अन्तजयी पुरुष सांख्य योग द्वारा परम नैष्कर्म्य सिद्धि प्राप्त करता है। परमात्मा की प्राप्ति रूपी परम सिद्धि पाता है।

इस प्रकार भगवान् ने आत्मा, पुनर्जन्म एवं इससे निवारण का उपाय कहा। पुनर्जन्म भी अनेकानेक कारणों से अनेकों बार होते हैं तथा व्यक्ति इसे जान नहीं पाता है---

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥[४]**

---

१. श्रीमद्‌भगवद्गीता १३/२४

२. श्रीमद्‌भगवद्गीता १८/४८

३. श्रीमद्‌भगवद्गीता १८/४९

४. श्रीमद्‌भगवद्गीता ४/५

इस प्रकार का ज्ञान प्राप्त करने के बाद यदि मानव कर्म फल पर आश्रित नहीं होता है तो वही योगी और संन्यासी होता है—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ।।[१]

जो कर्म फल को न चाहता हुआ करने योग्य कर्मों को करता है वही योगी तथा संन्यासी है । केवल अग्नि को या केवल क्रियाओं को त्यागने "वाला संन्यासी या योगी नहीं है"

इस प्रकार समस्त कर्म फलों पर अनाश्रित तथा सर्वत्र ही ईश्वर की सत्ता को देखने वाला मनुष्य अपने इसी ज्ञान के कारण किसी भी बन्धन से बांधा नहीं जाता है एवं सभी पापों को पार करता हुआ ईश्वर की प्राप्ति करता है—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ।।[२]

यदि तू सब पापियों से बढ़ कर भी अधिक पाप करने वाला है तो भी ज्ञान रूपी नौका द्वारा निःसंदेह सम्पूर्ण पापों से अच्छी तरह तर जाएगा ।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।।[३]

क्योंकि हे अर्जुन ! जैसे प्रज्वलित अग्नि ईंधन को भस्म कर देता है वैसे ही ज्ञान रूपी अग्नि सम्पूर्ण कर्मों को भी भस्म कर देती है ।

परन्तु बहुत बार ऐसा देखा जाता है कि व्यक्ति ज्ञान रहने पर भी ऐसे बहुत से कार्य करता है जो उसे नहीं करने चाहिए या जिसके करने की इच्छा वह नहीं रखता है । भगवान् श्रीकृष्ण इसका कारण भी पूर्वजन्मों के कर्मों को ही बताते हैं—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ।।[४]

हे अर्जुन ! अपने मोह के कारण यदि तू कोई कर्म न भी करना चाहे तो भी अपने पूर्व कर्मों से बंधा हुआ तू परवश होकर उसे करेगा ।

अतः जीवन तथा मृत्यु के रहस्यों को अनावृत करने की चेष्टा से ज्ञात होता है कि जीवन और मृत्यु दोनों में ही **"जीन्स का संरक्षण"** होता रहता है । अनेक प्रकार की औषधि एवं शल्य चिकित्सा, विकिरण चिकित्सा

१. श्रीमद्भगवद्गीता ६/१

२. श्रीमद्भगवद्गीता ४/३६

३. श्रीमद्भगवद्गीता ४/३७

४. श्रीमद्भगवद्गीता १८/६०

आदि के द्वारा निःसंदेह हम मानव जाति की औसत आयु बढ़ाने में सक्षम हुए हैं और इसी एक प्रयास से हम मृत्यु को भी एक रोग की श्रेणी में रख सकते हैं जो कि उपचार से ठीक नहीं हो पाता है । आत्मा के जानने के बाद भी पूर्वकृत कर्मों के बन्धन के कारण नवीन कर्मों का बंधन पुनः जीवात्मा को जकड़ता जाता है ऐसे में इस प्रकार साधारण जन-जीवन, मृत्यु के रहस्य की परवाह किए बिना भी इसके पार जाने की इच्छा रखते हैं । कृष्णद्वैपायन महर्षि वेदव्यास ने ऐसे समस्त जनों के कल्याणार्थ भगवान् श्रीकृष्ण के उपदेश को श्रीमद्भगवद्गीता के रूप में लिपिबद्ध किया । वह उपदेश है **"भक्ति"**—

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**तत्तो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।।**[१]

उस भक्ति के द्वारा मुझे तत्त्व से भली प्रकार जानता है कि मैं जो और जिस प्रभाव वाला हूं तथा उसी भक्ति से मेरे तत्त्व को जानकर तत्काल मेरे में ही प्रवेश कर जाता है (***यही मोक्ष है***) ।

अतः अर्जुन के माध्यम से समस्त भक्त जनों को भगवान् श्रीकृष्ण उपदेश देकर कहते हैं—

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अह त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।।**[२]

सभी धर्मों को छोड़कर तू केवल मेरी शरण आ । मैं तेरे समस्त पापों से तुझे मोक्ष दूंगा तू शोक न कर । सृष्टि का यह नियम है कि हर मानव को कर्म चक्र के अनुरूप ही अपने जीवन की रीति-नीति बनानी चाहिए । जो ऐसा नहीं करता वह वस्तुतः व्यर्थ ही जीता है । पापमय जीवन में लिप्त होता चला जाता है । कर्तव्यपालन की उपेक्षा के दुष्परिणाम, इंद्रिय भोगों में लिप्त रहने वालों की दुर्गति आदि के विषय में गीता का यही संदेश विज्ञान का मार्ग प्रशस्त कर रहा है । इक्कीसवीं सदी में यदि हम उज्ज्वल भविष्य को साकार करना चाहते हैं तो हमें गीता और विज्ञान में निहित इस सत्य को समझना ही होगा ।

इसलिए यह कहा जा सकता है कि जीवन मृत्यु के रहस्यों को सुलझाने में **भक्ति ही** श्रेष्ठतम है । इसी को साधन बनाकर इस संसृति रहस्य के पार जाकर मोक्ष की चेष्टा ही कल्याणकारी है । आइए गीता के संदेशों को हम अपने जीवन का संदेश बनायें ।

---

१. श्रीमद्भगवद्गीता १८/६६
२. श्रीमद्भगवद्गीता १८/६६

